## महामहोपाध्याय रुचिरदत्तोपाध्याय

रुचिरदत्तोपाध्याय महामहोपाध्याय देवदत्त के पुत्र थे। ये मिथिला देश निवासी मैथिल ब्राह्मण थे। वर्धमानोपाध्यायकृत कुसुमांजलि प्रकाश पर आपकी 'मकरन्द' नाम की टीका है। इससे मालूम होता है कि आपका पाण्डित्य अपेक्षाकृत पर्याप्त ऊँची श्रेणी का था। इसके अतिरिक्त तत्त्वचिन्तामणि के ऊपर भी आपकी लिखी हुई 'चिन्तामणि प्रकाश' टीका है।

आपका जन्मकाल १४ शताब्दी मालूम देता है, क्योंकि वर्धमानोपाध्याय का जब कि समय १४ शताब्दी है, यह हम वर्धमान के जीवन-चरित्र में लिख चुके हैं। अतः वर्धमानोपाध्यायकृत कुसुमांजलि प्रकाश टीका पर हुई आपकी मकरन्द टीका से यह स्पष्ट है कि रुचिरदत्तोपाध्याय एक शताब्दी बाद के हैं।

## यज्ञपति उपाध्याय

यज्ञपति उपाध्याय मिथिलादेश निवासी मैथिल ब्राह्मण थे। आप गंगेशोपाध्याय के पौत्र तथा वर्धमानोपाध्याय के पुत्र थे। आपका जन्मकाल १४वीं शताब्दी का प्रारंभ माना गया है। इनकी लिखी हुवी चिन्तामणि पर टीका अत्यन्त प्रामाणिक मानी जाती है। इनका मत न्यायशास्त्र के अन्दर प्रायः व्याप्तिवाद को छोड़कर इसके अतिरिक्त सर्वत्र आता है। कहीं पर 'उपाध्यायास्तु' करके आता है। और कहीं तो बिल्कुल स्पष्ट शब्दों में लिख दिया कि 'यज्ञपत्युपाध्यायास्तु' इत्यादि रूप से ऊपर प्रकरण ग्रन्थों में सर्वत्र मिलता है। जैसे—पक्षता—अवयव—सत्प्रतिपक्ष—अनुमिति—व्युत्पत्तिवाद प्रभृति ग्रन्थों में सर्वत्र ही उपलब्ध है। अनुमिति में तथा 'रंगं रजतं जानामि' इस स्थल में व्युत्पत्तिवाद के द्वितीयाकारक में प्रदर्शित यज्ञपत्युपाध्याय मत अत्यन्त ही कठिन है। मालूम पड़ता है यहाँ जैसे यज्ञपति ने अपना समस्त पाण्डित्य ही दिखला दिया हो।

## मथुरानाथ तर्कवागीश

मथुरानाथ तर्कवागीश बङ्गालदेश निवासी बङ्गाली ब्राह्मण थे, तथा श्रीराम तर्कालङ्कार के पुत्र थे। प्रसिद्ध नव्यनैयायिक तार्किक शिरोमणि श्री रघुनाथ के शिष्य थे। 'कोटालीपाड़ा' नामक ग्राम के समीप 'मानीहाटी' नामक ग्राम के निवासी थे। उस समय विद्वानों का विद्वत्तामय पारस्परिक संघर्ष दो प्रवाहों के रूप में चल रहा था। इस विषय का विशेष पौष्टिक प्रमाण पञ्चलक्षणी का दूसरा लक्षण है कि—"यत्र प्रतियोगिसमानाधिकरणत्व—प्रतियोगि-व्यधिकरणत्वलक्षणविरुद्धधर्माध्यासस्तत्रैवाधिकरणभेदेनाभावभेदाभ्युपगमो न तु सर्वत्र' इस सिद्धान्त को मानकर 'साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्' इस लक्षण की द्वितीयसाध्यपद की व्यावृत्ति में मथुरानाथ ने असंभव कहा। गदाधर ने भी यही कहा, किन्तु जगदीश ने इसका खण्डन किया। इन मथुरानाथ तर्कवागीश को कोई १५वीं शताब्दी का, कोई १६वीं शताब्दी का बतलाता है परन्तु जो कुछ भी १५–१६ शताब्दी के ही हैं।

मथुरानाथ ने "तत्त्वचिन्तामणि" के ऊपर तथा "दीधिति" के ऊपर अलग-अलग टीकायें लिखीं हैं। जो कि 'माथुरी' के नाम से प्रसिद्ध हैं। इसी 'माथुरी' को मथुरानाथ

'रहस्य' के नाम से कहते हैं। तत्त्वचिन्तामणि के ऊपर जो माथुरी है वह चारों खण्डों की प्रकाशित हो चुकी है। और 'दीधिति' के ऊपर जो माथुरी है वह सर्वथा अभी तक अप्रकाशित है। कुसुमाञ्जलि तथा आत्मतत्त्व विवेक की दीधिति पर जो इनकी माथुरी टीका है वह तो अत्यन्त ही दुरूह तथा जटिल है। और उसमें भी बौद्धाधिकार की दीधिति की माथुरी का तो कहना ही क्या है।

इसके अतिरिक्त मथुरानाथ की 'आलोक' के ऊपर भी टीका है जो कि 'माथुरी' के नाम से प्रसिद्ध है। और 'आलोक' 'तत्त्वचिन्तामणि' के ऊपर पक्षधर मिश्र की टीका है, वह भी अभीतक अप्रकाशित ही है। आलोक के ऊपर गादाधर की 'गदाधरी' टीका भी है और वह भी अभीतक अप्रकाशित ही है। और उस गदाधरी के ऊपर भी माथुरी है। इसके अतिरिक्त मथुरानाथ तर्कवागीश का 'न्याय रहस्य' नाम का भी स्वतन्त्र ग्रन्थ है। यह न्यायरहस्य अत्यन्त ही अपूर्व ग्रन्थ है, हम तो कहेंगे कि वास्तविक में यह ग्रन्थ न्याय का रहस्यभूत ही है। मथुरानाथ ने १४३० शताब्दी से लेकर १४५० शताब्दी पर्यन्त एकमात्र अपने पिता से ही अध्ययन किया। इसके बाद फिर १५ वर्ष तक शिरोमणि से अध्ययन किया। विद्वान् होने के अतिरिक्त ये इतने बड़े भाग्यशाली थे कि इनकी वंश परम्परा अभीतक मौजूद है। श्यामाकान्त तर्कपञ्चानन कहा करते थे कि इनके वंशज अब भी 'मानीहाटी' ग्राम में रहते हैं।

## भासर्वज्ञ

श्री भासर्वज्ञ "न्यायसार नामक ग्रन्थ के कर्त्ता माने गये हैं। भासर्वज्ञ न्यायशास्त्र के प्रकरणसंबद्ध विषयों के ही विशेषरूप से प्रवर्त्तक रहे। उनमें भी इन्होंने अन्य प्रमेयांश से सम्बन्धित न्याय सम्प्रदाय के विषय को छोड़कर एकमात्र प्रमाणवाद को ही आश्रय प्रदान किया। अर्थात् प्रत्यक्ष—अनुमान—उपमान—शब्द—ये चार ही न्याय सम्प्रदाय सम्मत प्रमाण माने हैं अतः इन्होंने भी एकमात्र विशुद्ध प्रमाणवाद को अपनाते हुए उसी का यथावत् निरूपण किया है। न्यायसार बहुत ही आदरणीय ग्रन्थ है। इसकी उपादेयता समस्त नैयायिक वर्ग ने स्वीकार की है। इसके ऊपर बहुत सी महत्त्वपूर्ण टीकायें भी हो चुकी हैं। भासर्वज्ञ के विषय में सुनने में आता है कि ये बड़े ही बुद्धिमान तथा प्रत्युत्पन्नमति व्यक्ति थे। इन्होंने की न्याय जगत् में एक विशेष कल्पना यह है कि इन्होंने आत्मा की निरतिशयता को स्वीकार करते हुए आनन्दोपलब्धिस्वरूप मुक्ति का अङ्गीकार किया है। इनका कार्यकाल नवम शताब्दी है।

## शिवादित्य

शिवादित्य का अस्तित्व काल दसवीं शताब्दी ही मालूम होती है। आपने लक्षण-मालाग्रन्थ का निर्माण किया है, जैसा कि श्री हर्ष के उल्लेख से मालूम पड़ता है। आपकी वैशेषिकदर्शन के पदार्थों से सम्बन्ध रखनेवाली 'सप्तपदार्थी' नामक पुस्तक है जो कि अत्यन्त ही उपादेय है, तथा वैशेषिक पदार्थों का बहुत ही सुन्दर अपूर्व ढंग से उपपादन करनेवाली पुस्तक है। शिवादित्य भगवान् शंकर के अनन्य भक्त, तथा कुछ शिथिल प्रकृति के आदमी

अवश्य थे, परन्तु पदार्थ के अत्यन्त ही सन्निविष्ट व्यक्ति रहे। कोई लोग 'शिवादित्य' को ही 'व्योमशिव' के नाम से पुकारते हैं परन्तु यह धारणा उन लोगों की सर्वथा निर्मूल तथा निराधार है। इनकी एक विशेषता यह भी है कि जिस हेतु के आधार पर उदयनाचार्य और श्रीधर ने शब्द के प्रामाण्य का अनङ्गीकार किया है उसी हेतु से शिवादित्य ने भी शब्द प्रमाण नहीं है यह खण्डन किया है।

## व्योमवती के रचयिता व्योमशिव

इन व्योमशिव को 'व्योमशिवाचार्य' के नाम से भी पुकारते हैं। व्योमशिवाचार्य व्योमवती टीका के रचयिता हैं। जो कि टीका वैशेषिक दर्शन के ऊपर अर्थात् प्रशस्तपाद भाष्य के ऊपर है। यह टीका चिरप्राचीन होते हुवे भी प्रकाशित अभी ही हुई है। व्योमवती टीका वैशेषिक दर्शन सम्बन्धी प्रकरणों में सर्वप्रथम स्थान रखती है। यह टीका पाण्डित्य की दृष्टि से तथा पदार्थ की सरलता की दृष्टि से सर्वथा अपूर्व एवं आदरणीय है। व्योमशिवाचार्य ने शब्द के प्रामाण्य का व्यवस्थापन करते हुवे शब्द के अप्रामाण्य को स्वीकार करनेवाले उदयनाचार्य एवं श्रीधर प्रभृति के मत का खण्डन किया है। इसके अतिरिक्त आचार्य महोदय ने बौद्ध सिद्धान्तों का भी चुन-चुनकर व्योमवती के अन्दर सरल एवं सरस भाषा में बड़ा ही मजेदार खण्डन किया है। व्योमशिवाचार्य का अस्तित्वकाल २६५ ईशवीय ही हमें उपलब्ध हुआ है।

* समाप्त *

* श्री *

# न्याय सिद्धान्त मुक्तावल्याम्

चूड़ामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥१॥

जो कि चन्द्रमा वास्तविकमें चूड़ा (मस्तक) का मणि (आभूषण) नहीं हो सकता है उस चन्द्रमा को सर्वशक्तिमान् होने के नाते जिस भगवान् शङ्कर ने, मस्तक का आभूषण बना लिया है तथा जो कि वासुकि (एतन्नामक सर्पराज) वलय (हस्तका आभूषण) नहीं हो सकता परन्तु उस वासुकि को जिस भगवान् शङ्कर ने हाथ का आभूषण बना लिया है, एवं जो कि भगवान् शंकर लीला (विनोद) से होने वाले नृत्य के विशेषज्ञ हैं वे हमारे कल्याण करनेवाले होवें ॥१॥

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीयति ।
ब्रह्मोपेन्द्रशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ॥१॥
जननीजनकौ नत्वा शिवदत्तगुरोः पदम् ।
ज्वालाप्रसादः कुरुते मुक्तावलिविलासिनीम् ॥२॥
श्रीगुरुं मनसा ध्यात्वा श्रीगुरुं संप्रणम्य च ।
व्याख्यायते निबन्धोऽयं श्रीगुरोः परितुष्टये ॥३॥

विघ्नापनुत्तये कृतं मंगलं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मंगलाय च ग्रन्थकोटावुल्लिखति **चूड़ामणीकृतेति** । अत्र च लीलाताण्डवपण्डितो भव्याय भवतु इत्यन्वयः[1] । लीलया यत्ताण्डवं नृत्यविशेषः तत्र पण्डितोऽभिज्ञः भव्याय-

---

१ नातः समाप्तपुनरात्तत्वं दोषः । समाप्तपुनरात्तत्वं तदैव भवति यदा विशेष्यवाचकपदप्रयोगानन्तरं विशेषणवाचकपदप्रयोगो भवति स चात्र नास्ति लीलाताण्डवपण्डितस्यैव विशेष्यत्वात् । समाप्तपुनरात्तत्वं हि क्रियान्वयेन शान्ताकांक्षस्य विशेष्यवाचकपदस्य विशेषणान्तरान्वयार्थं पुनरनुसन्धानम् । समाप्तं सत्पुनरात्तं-उपात्तं यत्र वाक्ये तत्समाप्तपुनरात्तमिति व्युत्पत्तेः । तदुक्तं—

समाप्तपुनरात्तं तत्पूर्णे यद्गृह्यते-ऽन्वये ।
चन्द्रार्धशेखरः शंभुर्मां पातु गिरिजाधिपः ॥ इति ।

अन्वये पूर्णे-समाप्ते सत्यपि यत्पदं तदन्वयि शब्दान्तरेण पुनर्गृह्यते तत्समाप्तपुनरात्तमिति तदर्थः ।

कल्याणाय भवतु कल्याणं करोतु इत्यर्थः। विशेषणमाह **चूड़ामणीकृतेति**। न चूड़ामणिः अचूड़ामणिः—अचूड़ामणिश्चूड़ामणिः संपद्यते इति चूड़ामणीकृतः चूड़ामणीकृतो-विधुर्येन स चूड़ामणीकृतविधुः। चूड़ामणिः शिरोभूषणम्। यस्य ललाटे चन्द्रमा राजते इति भावः। प्रकृष्टप्रकाशवतो नमस्कार्यत्वकथनेन प्रौढयुक्तिमत्त्वमाविष्कृतम्। विशेष-णान्तरमाह **वलयीकृतेति**। न वलयः अवलयः अवलयो वलयः संपद्यते इति वलयीकृतः वलयीकृतो वासुकिर्येन स वलयीकृतवासुकिः। वलयः कंकणम्। वासुकिः सर्पविशेषः। यस्य कङ्कणस्थानापन्नो वासुकिरित्यर्थः। एतेन दुर्गमविषयधारिणो नमस्कार्यत्वाव-गत्या दुर्गमयुक्तिमत्वं प्रकृतग्रन्थस्येत्यभिव्यज्यते। विशेषणान्तरमाह **भव** इति। भवति जगदस्मादिति भवः, जगत्कारणं महादेव इति यावत्।

अथ जातितद्भिन्नप्रवृत्तिनिमित्तकशब्दानां मध्ये जातिप्रवृत्तिनिमित्तकशब्द एव विशेष्यवाचक इति नियमः[1]। विशेष्यविशेषणभावे कामचार इति प्रवादस्तु यत्र द्वयोरेव जातिप्रवृत्तिनिमित्तकत्वं, तद्भिन्नप्रवृत्तिनिमित्तकत्वं वा तत्स्थलाभिप्रायेण। यथा नीलोत्पलमित्यादौ जातिप्रवृत्तिनिमित्तकत्वादुत्पलशब्दस्य विशेष्यवाचकत्वमेव, तथा प्रकृतेऽपि शिवशरीरवृत्तिभवत्व[2]जातिविशेषप्रवृत्तिनिमित्तकस्य भवशब्दस्य विशेषणपरत्वानुपपत्त्या विशेष्यपरत्वमेव वक्तव्यम्, तथा च सति भवो भव्याय भवत्वित्येवान्वयात्समाप्तपुनरात्तत्वदोषो दुर्वारः, चूड़ामणीकृतविधुर्वलयीकृतवासुकि-र्भवो भव्याय भवत्वित्येतावताऽन्वयबोधेनैव शान्ताकाङ्क्षस्य विशेष्यवाचकभवपदस्य लीलाताण्डवपण्डित इति विशेषणान्तरान्वयार्थं स भवः कीदृश इत्याकाङ्क्षा-संपादनाय भवस्मरणस्यावश्यकत्वादिति चेन्न।

---

१ उक्तनियमानङ्गीकारे नीलोत्पलयोर्विशेष्यविशेषणभावे नियामकाभावेन उत्पलस्य विशेषणत्वविवक्षया उत्पलनील इति प्रयोगप्रसंगः। न चेष्टापत्तिः। **कडाराः कर्मधारय** इति सूत्रवैयर्थ्यप्रसंगात्। अत्रेदमाकूतम्। मानुषब्राह्मण इत्याद्यप्रयोगाद् विशेषणविशेष्य-योर्यत्र मिथस्तादात्म्येन व्यभिचारस्तत्रैव कर्मधारय इति नियमः। तथा च कर्मधारये उभयस्य व्यभिचारनिरूपकाधिकरणव्यावर्त्तकतया विद्यमानत्वे सतीतरव्यावर्त्तकत्वरूप-विशेषणलक्षणाक्रान्ततया विशेषणत्वसंभवेन नीलोत्पलमितिवदुत्पलनीलमिति प्रयोगप्रसंगः। तथा हि समासविधायकसूत्रे यत्प्रथमान्तनिर्दिष्टं तत्समासे पूर्वं निपततीति नियमः। **विशेषणं विशेष्येण बहुलमिति** कर्मधारयविधायकसूत्रे विशेषणवाचकपदस्य प्रथमा-न्तनिर्दिष्टत्वात्पूर्वनिपातनियमः। एवं चोत्पलनीलमितिप्रयोगापत्तिवारणाय जातितद्भिन्न-प्रवृत्तिनिमित्तकशब्दानां मध्ये जातिप्रवृत्तिनिमित्तकशब्द एव विशेष्यवाचक इति नियमा-ङ्गीकार आवश्यकः। तथाचोत्पलस्यैव विशेष्यतया न तथा प्रयोग इति ध्येयम्।

२ न चैकव्यक्तिवृत्तितया भवत्वं न जातिरिति वाच्यम्। कल्पभेदेन शिवशरीरस्य नानात्वात्। न च भवपदस्य शरीरपरत्वे भवः सर्वं जानातीति प्रयोगानुपपत्तिः, ईश्वरज्ञानस्य किंचिदनवच्छिन्नत्वनियमेनाऽवच्छेदकतासंबन्धेन ज्ञानवत्त्वबोधकतायाः स्वीकर्त्तुमशक्यत्वात्,

लीलाताण्डवपण्डित इत्यस्यानन्वये विशेष्यवाचकभवपदस्य शान्ताकाङ्क्षत्वासंभवात् तथाहि-विधोश्चूडामणीकरणं किमर्थं वासुकेर्वलयीकरणं वा किमर्थं इति प्रयोजनाकाङ्क्षासंभवात्[1]। प्रथमतो लीलाताण्डवपण्डित इत्यस्यान्वये तु नर्त्तनं भूषणं विना न शोभते इति चूड़ामणीत्यादिकमुक्तमिति नोक्तशंकावकाशः। तथा च लीलाताण्डवपण्डित इति विशेषणमेव। तथा च भवपदस्यैव विशेष्यवाचकत्वमिति ध्येयम्। अत्र भवपदार्थस्य नर्तनवत्त्वप्रतिपादनेन सन्तुष्टत्वलाभात्प्रार्थिता अर्था भविष्यन्त्येवेति सूचितम् ॥१॥

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः।
विशदीकरवाणि कौतुकान्नु राजीवदयावशंवदः ॥२॥

अपने से बनाई हुई कारिकावलीको अत्यन्त संक्षिप्त प्राचीनाचार्यों की उक्तियों के द्वारा राजीव नामक शिष्य के ऊपर जो मेरी दया उसके आधीन होकर मैं विश्वनाथ पञ्चानन अना-

---

समवायेन ज्ञानवत्तायाश्च तत्रासत्त्वादिति वाच्यम्। स्वाश्रयविशिष्टत्वसंबन्धेन भवत्वजातिमत आत्मन एव भवपदार्थत्वात्। स्वपदं भवत्वजातिपरम्। वै० स्ववृत्तिचेष्टाऽसाधारणकारणप्रयत्नवत्त्वसंबन्धेन, स्वपदं स्वाश्रयीभूतशरीरपरम्। न च भवति जगदस्मादिति व्युत्पत्त्या जगत्कारणत्वमेव भवपदप्रवृत्तिनिमित्तमस्त्विति वाच्यम्। शीघ्रोपस्थितिकरूढ्यर्थमादायाऽन्वयबोधोपपत्तौ विलंबोपस्थितिकयोगार्थमादायान्वयबोधे निराकाङ्क्षत्वात्। वस्तुतो जगत्कारणत्वस्याऽतिप्रसक्ततया भवत्वसहितमेव तद् भवपदप्रवृत्तिनिमित्तं वाच्यं, तद्वरं लाघवाद्भवत्वमेव भवपदप्रवृत्तिनिमित्तमिति ध्येयम्।

१ न चैवं समाप्तपुनरात्तत्वदोषः कुत्रापि न स्यात्, शाब्दबोधे आकाङ्क्षायाः प्रयोजकत्वेन विशेषणान्तरान्वयार्थं स कीदृश इत्याकाङ्क्षाया अन्ततः कल्पनीयतया शान्ताकाङ्क्षत्वाभावादिति वाच्यम्। यत आकाङ्क्षा द्विविधा—उत्थाप्याकाङ्क्षा उत्थिताकाङ्क्षा च। तत्र अनियताकाङ्क्षा आद्या। भवः कीदृश इत्याकाङ्क्षा तु न नियता, प्रयोजनाकांक्षा तु नियता। तथा च नियताऽऽकांक्षारहितान्वयबोधोत्तरं विशेष्यवाचकपदस्य पुनरनुसन्धानमेव समाप्तपुनरात्तत्वम्। स कीदृश इत्याद्युत्थाप्याकांक्षया विशेषणान्तरान्वयस्थले एव स दोषः। यत्र तु आकांक्षा नियता तत्र न समाप्तपुनरात्तत्वम्, यथा क्रियाकारकपदानां परस्पराकांक्षा नियता तथा प्रयोजनाकांक्षापि नियतैव। तथा च प्रकृतान्वयसमाप्त्युत्तरकालीनप्रकृतान्वयानुपपादकविशेषणोपादाने एव स दोषः। यत्र तु प्रकृतवाक्यार्थोपपादकविशेषणोपादानं प्रकृतवाक्यार्थसमाप्त्युत्तरकालीनं तत्र न तथा। अत्र मङ्गलकार्यकारित्वरूपवाक्यार्थस्योपपादकं इष्टदेवतात्वमिति नोक्तदोषावसरः। तदुक्तम्—

समाप्तपुनरात्तं स्याद् गुणो वाक्यान्तरोदये।
रामापि स्यादुपादेया महागुणवती सतीति ॥

वाक्यविशिष्टत्वं समाप्तपुनरात्तत्वम्। वै० स्वतादात्म्य- स्वघटकविशेष्यवाचकपदविशिष्टविशेषणवाचकपदघटितत्वोभयसं०। वै० स्वोत्तरत्व- स्वान्वयानुपपादकत्वोभयसं०।

सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
संत्सामान्यविशेषनित्यमिलिता ऽभावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥

यास से विशद करता हूँ । अभिप्राय यह है कि राजीवनामक शिष्य परममन्दमतिथा, परन्तु इनका परम भक्त था । भक्ति के कारण ही राजीव इनका परमदयापात्र हुआ जिस दया के अधीन होकर ही भाष्योक्तियों-से निबद्ध इस कारिकावली ग्रन्थ को विश्वनाथपञ्चानन ने मुक्तावली टीका के द्वारा विशद किया ॥२॥

प्रवृत्त्यङ्गतया इतरग्रन्थवैलक्षण्यं दर्शयति **निजनिर्मितेति** । अत्राऽहमित्यध्याहारः । तथा चाहं "विश्वनाथपञ्चाननो" राजीवदयावशंवदः "सन्" निजनिर्मितकारिकावलीं अतिसंक्षिप्तचिरन्तनोक्तिभिः कौतुकान्ननु विशदीकरवाणि इत्यन्वयः । स्वकृतमूलस्य स्वयं व्याख्याने निमित्तमाह **राजीवेति** । राजीवस्तन्नामकशिष्यस्तत्र या दया तया वशंवदस्तदधीनः सन्नित्यर्थः । एतेन ग्रन्थव्याख्याने राजीवदयावशंवदत्वं निमित्तमिति सूचितम् । अथ वा राजीवस्य-राजीवलोचनस्य भगवतो या दया तया वशंवद इति विग्रहः । **"विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्य"** इति वचनेन लोचनशब्दस्य लोपः । निजेन निर्मिता निजनिर्मिता निजनिर्मिता चासौ कारिकावली चेति निजनिर्मितकारिकावली तामिति विग्रहः । अति अत्यन्तं संक्षेपः शब्दसंक्षेपो[1] यासु ताः अतिसंक्षिप्ताः । चिरन्तनानामुक्तयश्चिरन्तनोक्तयः । अतिसंक्षिप्ताश्च ताश्चिरन्तनोक्तयश्चेति अतिसंक्षिप्तचिरन्तनोक्तयस्ताभिरिति विग्रहः । अभेदे तृतीया, तस्य विशदीकरणेऽन्वयः । **विशदीकरवाणि** व्याख्यामि । पद्यस्थाऽतिसंक्षिप्तेतिविशेषणेन लीलावत्यादिप्राचीननिबन्धेषु ग्रन्थबाहुल्येन बहुतरदुःखहेतुप्रतिपत्तिकतया बालानां प्रवृत्तिर्न स्यादिति सूचितम् । एतेन लीलावत्यादिप्राचीननिबन्धाध्ययनेनैव कारिकावलीप्रतिपादितार्थो बोद्धव्य इति किं भवत्कृतविशदनिबन्धनेनेति शंका निरस्ता । स्वकीयकल्पनामूलकताप्रयुक्ताऽनादरणीयतां निरसितुं **चिरन्तने**त्युक्तम् । नन्वित्यवधारणे । कौतुकादेवेत्यर्थः । एतेन स्वस्य ग्रन्थकरणे क्लेशाभावः सूचितः । अनेन विषयप्रयोजनसंबन्धाधिकारिरूपानुबन्धचतुष्टयमपि दर्शितम् । कारिकावलीं विशदीकरवाणीत्यनेन कारिकावल्यर्थस्य विषयत्वात् । कारिकावल्यर्थज्ञानस्य प्रयोजनत्वात् । कारिकावल्यर्थमुक्तावल्योः प्रतिपाद्यप्रतिपादकभावस्य संबन्धत्वात् । तदर्थजिज्ञासोरधिकारित्वादित्यस्मद्गुरुचरणाः ॥२॥

---

१ तत्त्वर्थसंक्षेपः, तथा सति अर्थसंक्षेपेण सकलार्थाप्रतिपादकतया बालव्युत्पत्तिजनकता न स्यादिति ध्येयम् ।

सिद्धान्तमुक्तावली नाम दो वस्तुओं का है–ग्रन्थ का–तथा माला का। ग्रन्थ पक्षमें२ श्लोकार्थ–सद्रव्या-द्रव्यकी प्रतिपादिका। (पृथिवी आदि नव द्रव्यों का प्रतिपादन करने वाली)। रूप-रस-आदि २४ गुणों की प्रतिपादिका। उत्क्षेपण आदि ५ कर्मोंकी बोधिका। सामान्य-विशेष-नित्यमिलित-समवाय इनसे युक्त-तथा अभाव का जो प्रकर्ष प्रागभावादि भेद से चातुर्विध्य उससे उज्जवल (वर्णन करने वाली) सद्युक्ति-अच्छी २ युक्तियों वाली, विश्वनाथपंचानन के द्वारा विष्णुभगवान् को अर्पित की हुई यह सिद्धान्तमुक्तावली नामक पुस्तिका विद्वान् लोगों के मन के हर्ष को बहुकाल पर्यन्त बढ़ावे।

मालापक्ष में–सिद्ध हो गया है अन्त जिन्हों का–अर्थात् जिनसे बढ़कर अतिशयित्व किन्हीं भी मोतियों में नहीं है, ऐसे मुक्ता(मोतियों) की आवलीरूप माला कैसी है कि–सद्रव्या-द्रव्यसाध्य है। गुण (सूत्र) धागे से गुम्फित (गूंथी हुई है)। तथा सुकृती पुण्यात्मा लोगों के सत्कर्मों की बोधिका है–अर्थात् जिस व्यक्तिके पास यह सच्चे मोतियों की माला हो–समझ लीजिये कि उसने बहुत ही अच्छे कर्म किये हैं, जिन कर्मों के कारण वह माला उसे प्राप्त हुयी है। एवं माला के सामान्य धर्म मालात्व विशेष धर्म-महत्त्व- निर्मलत्व-वत्तुलत्व आदि से नित्य-हमेशा, मिलित-सबद्ध है। एवं अभाव (तेजोऽभावरूप अन्धकार) के होने पर अपने प्रकर्षसे उज्जवल (घट-पट-आदि पदार्थों का प्रकाश करने वाली) है। विश्वनाथ भगवान् शंकर ने इस माला को विष्णु भगवान्के वक्षस्थल में पहिना दी है। इश श्लोक से अनुबन्धचतुष्टय दिखला दिया है। विषय-प्रयोजन-सम्बंध अधिकारी- ये अनुबन्धचतुष्टय हैं। इस ग्रन्थ में निरूपित द्रव्य-गुण-आदि ७ पदार्थ विषय हैं। सात पदार्थों का ज्ञान होना ही प्रयोजन है। जिस व्यक्ति को सात पदार्थों के ज्ञान की इच्छा हो वही इस ग्रन्थ का अधिकारी है। और ग्रन्थ का तथा पदार्थों का प्रतिपाद्यप्रतिपादकभाव सम्बन्ध है। अर्थात् यह ग्रन्थ सात पदार्थों का प्रतिपादक है–और पदार्थ इससे प्रतिपाद्य हैं॥३॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।

यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥ इति स्मृत्या क्रियमाण-कर्मणो भगवदर्पणीयत्वस्मरणेन स्वचिकीर्षितग्रन्थं मुक्तावलीत्वेन निरूप्य भगवत्यर्पयन् सुकृतिनां सन्तोषं प्रार्थयते **सद्रव्येति**। एषा सिद्धान्तमुक्तावली विष्णोर्वक्षसि विन्यस्ता सुकृतिनां मनसो मुदं वितनुतामित्यन्वयः। अन्यानि विशेषणानि। एषा-मत्कृतवाक्यसन्दर्भरूपा हृदिस्था। मालापक्षे सिद्धान्ताश्च ता मुक्ताश्चेति सिद्धान्तमुक्ताः तासामावली इति सिद्धान्तमुक्तावली। "ग्रन्थपक्षे सिद्धान्ता एव मुक्ताः सिद्धान्ताः मुक्ता इवेति वा सिद्धान्तमुक्तास्तासामावली सिद्धान्तमुक्तावली। कीदृशी सिद्धान्तमुक्तावली सद्रव्या-द्रव्यमेव द्रव्यं मूल्यं तेन सह वर्त्तते इति सद्रव्या। गुण एव गुणः सूत्रं तेन गुम्फिता। सन्ति-प्रामाणिकानि-कर्माणि उत्क्षेपणादीनि तान्येव कर्माणि "मुक्तावलीप्राप्तिहेतुसुकृतकर्माणि" तेषां ज्ञापिका। सामान्यमेव सामान्यं मुक्तानां परस्परसादृश्यं विशेष एव विशेषा, नित्यमिलितं"समवायः" एव नित्यमिलितं अखण्डितसंबन्धः अत्रुटितत्वमिति यावत्। सामान्यं च विशेषश्च नित्यमिलितं चेति सामान्यविशेषनित्यमिलितानि, सन्ति सामान्यविशेषनित्यमिलितानि यस्यां सेति बहुव्रीहिः। अभाव एवाऽभावः "अन्धकारः" तत्र प्रकर्षेणोज्वला द्योतमाना।

**विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति नूतनेति ।**
**ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणम् ।**
**विनापि मङ्गलं नास्तिकादीनां ग्रन्थेषु निर्विघ्नपरिसमाप्तिदर्शनादिति चेत् ।**

विघ्नध्वंस के लिये मंगल किया-हमारे शिष्य भी अगाड़ी ऐसे ही करें इस प्रकार की इन्हें शिक्षा देने के लिये ग्रन्थ में उसे ( मंगल को ) लिखा । "नूतन" इत्यादि कारिका से—

नवीन मेघों की तरह कान्तिवाले, तथा गोपों की स्त्रियों के वस्त्र चुराने वाले- संसाररूपी वृक्ष के कारण उस कृष्ण को नमस्कार है ।

नवीन मंगल को विघ्नध्वंस के प्रति कारण मानते हैं-प्राचीन समाप्ति के प्रति कारण मानते हैं- नास्तिक दोनों मत का खण्डन करता है—"ननु मंगलं न" इत्यादि ग्रन्थ से, मंगल नतो विघ्न-ध्वंस के प्रति कारण है और न समाप्तिकारण है । ( क्योंकि मंगल यदि कारण होता तो कारण के विना कार्य नहीं होता है क्यों कि कार्यकारणभाव का निश्चायक होता है अन्वयसहचार तथा व्यतिरेक सहचार- प्रकृत में दोनों का व्यभिचार है) क्योंकि मंगल के विना भी नास्तिकों के किरणा-वली आदि ग्रन्थों में निर्विघ्न समाप्ति देखी जाती है । ("निर्विघ्नसमाप्तिदर्शनात" इसका अर्थ है "विघ्नध्वंस पूर्वक समाप्ति दर्शनात्" अर्थात् नास्तिकों के ग्रन्थों में मंगल के विनाही कारणान्तर से या स्वतः पहिले विघ्नध्वंस उसके बाद समाप्ति बराबर देखते हैं । अतः मंगलाचरण निष्फल है ।

अथवा नवो अप्रश्लेषेण स्वान्तविज्ञानातिशयानन्दजननीत्यर्थः । सत्यो युक्तय एव युक्तयो "रचनाविशेषाः" यस्यां सेति विग्रहः । अत्र श्लेषेण परंपरितरूपकम् । तदुक्तं-

अन्यारोप्याभावप्रयोजकस्य स्वभावस्य ।
प्रतियोगीपरकीयारोपस्तत्परंपरितम् ॥

यदारोपं विना आरोपान्तरं न निर्वहति तत्परंपरितरूपकमित्यर्थः । ग्रन्थपक्षे सिद्धान्ता एव मुक्ताः "सिद्धान्ताः मुक्ता इवेति वा" सिद्धान्तमुक्तास्तासामावली सिद्धान्तमुक्तावली । द्रव्यैः सहिता सद्रव्या—प्रतिपादकतासंबन्धेन द्रव्यवती । गुणैश्चतुर्विंशतिसंख्याकैर्गुम्फिता प्रतिपादिका । सुकृतिनामित्यस्य मनस इत्यने-नाऽन्वयः । सत्कर्मणां-उत्क्षेपणत्वादिजात्याक्रान्तानां ज्ञापिका-बोधिका । सामान्यं च विशेषश्च नित्यमिलितं चेति द्वन्द्वः । ततः सन्ति सामान्याविशेषनित्यमिलितानि यस्यां सेति बहुव्रीहिः । प्रतिपादकतासम्बन्धेन सामान्याद्यन्यतमवतीति भावः । नञ् प्रश्लेषेण अभावस्य य प्रकर्षः– प्रागभावादिभेदेन वैलक्षण्यं तस्योज्वला-प्रति-पादिकेत्यर्थः । कृतिना-कुशलेन ।

केचित्तु अनेन श्लोकेनाऽनुबन्धचतुष्टयं प्रदर्शितमिति वदन्ति । तथाहि द्रव्यादयो विषयाः । पदार्थतत्वज्ञानं प्रयोजनम् । प्रतिपाद्यप्रतिपादकभावः संबन्धः । पदार्थतत्वावधारणकामोऽधिकारीति । तच्चिन्त्यम् । कारिकावलीव्याख्यानग्रन्थस्य कारिकावल्यनुबन्धचतुष्टयेनैव तद्वत्वात्-पृथगनुबन्धचतुष्टयप्रदर्शने प्रयोजनाभावा-दिति ध्येयम् ॥ ३ ॥

ननूद्देशलक्षणपरीक्षासंग्रहात्मकशास्त्रानन्तर्गतनूतनेतिश्लोकः शास्त्रादौ किमर्थं रचितः, न्यायवैशेषिकपदार्थजिज्ञासुज्ञानानुपयोगित्वादित्यत आह **विघ्नविघातायेति ।**

प्रारिप्सितग्रन्थस्येत्यादिः। समाप्तिप्रतिबन्धकाऽधर्मविशेषो विघ्नः, तस्य विघातो-ध्वंस[1]। तस्मै[2] मङ्गलशब्देनाऽत्र नूतनेत्यादिश्लोक उच्यते। तथा च मङ्गलं कर्त्तव्यं "कृतिसाध्यं" विघ्नध्वंसजनकत्वादित्यनुमानं फलितम्। ग्रन्थादौ मङ्गलो-ल्लेखस्य प्रयोजनमाह **शिष्यशिक्षायै** इति। ईप्सितविघ्नशान्तये ग्रन्थादौ मंगलं कर्त्तव्यमिति शिष्यशिक्षार्थमित्यर्थः। **निबध्नाति**। ग्रन्थे उल्लिखतीत्यर्थः। तथा च मंगलस्य विघ्नध्वंसः फलम् तन्निबन्धनं च शिष्यशिक्षार्थमिति भावः।

ननु कारणत्वग्रहेऽन्वयसहचारग्रहस्य व्यतिरेकसहचारग्रहस्य चाऽन्वयव्यति-रेकाभ्यां सहकारित्वेन सिद्धतया मङ्गलविघ्नध्वंसयोर्मङ्गलसमाप्त्योर्वाऽन्वयसहचार-व्यतिरेकसहचारग्रहाऽसंभवेन मङ्गलविघ्नध्वंसयोः समाप्तिमङ्गलयोर्वा न प्रत्यक्षेण कार्यकारणभावग्रहः संभवति, तथा हि-**यत्सत्त्वे यत्सत्त्वमन्वयसहचारः**– कारणसत्त्वे कार्यसत्त्वमिति यावत्। **यत्सत्त्वे यदभावो ऽन्वयव्यभिचारः**–कारणसत्त्वे कार्याभाव इति यावत्। अन्वयव्यभिचारश्च कादंबर्यादौ, तत्र मङ्गलसत्त्वेऽप्यसमाप्तेः। **यदभावे यदभावो व्यतिरेकसहचारः**, कारणाभावे कार्याभाव इति यावत्। **यदभावे यत्सत्त्वं व्यतिरेकव्यभिचारः**, कारणाभावे कार्यसत्त्वमिति[3] यावत्। व्यति-

---

१ वीत्युपसर्गसमभिव्याहृतघातपदस्य विलक्षणनाशार्थकत्वात्। दिनकरीकृतस्तु घातपदेनैव विघ्नध्वंसबोधनाद् विपदानर्थक्यमाशंक्य विशिष्टवाचकपदानां सति पृथग्विशेषण-समवधाने विशेष्यमात्रपरत्वमिति नियमानुरोधेन घातपदस्याऽभावमात्रपरत्वं- विपदस्य जन्यपरत्वं तथा च ध्वंसलाभः। न च तादृशनियमे मानाभावः। स कीचकैर्मारुतपूर्णरन्ध्रै-रित्यभियुक्तप्रयोगस्यैव प्रमाणत्वात्। तथाहि- वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः इति कोषान्मारुतपूर्णरन्ध्रत्वध्वनिमत्त्वोभयविशिष्टे वेणावेव कीचकपदप्रयोगान्मारुतपूर्णरन्ध्रैः कूजद्भिरिति पदद्वयार्थस्य पौनरुक्त्यापत्तेरित्याहुः। तच्चिन्त्यम्। घातपदस्य प्राणवियोगानु-कूलव्यापाररूपहिंसार्थकत्वेन वीत्युपसर्गबलेन जन्याभावरूपध्वंसपरत्वात्। उपसर्गस्य द्योतकत्वपक्षे विपदानर्थक्यमिष्टमेव वाचकत्वपक्षेऽपि घातशब्दस्य जन्याभाववाचकत्वाभावाद् विशिष्टवाचकपदानामिति नियमप्रसक्तेरभावादिति ध्येयम्।

२ उद्देश्यत्वं चतुर्थ्यर्थः। अन्वयश्चाऽस्य कृतौ। विषयत्वं क्तप्रत्ययार्थः। तच्च साध्यस्वरूपं मङ्गलान्वयि। मङ्गलमिति द्वितीयार्थः कर्मत्वं, निबन्धनेऽन्वेति। शिष्यशिक्षायै इति चतुर्थ्यर्थः उद्देश्यत्वं निबन्धेऽन्वेति। निबन्धनं च श्लोकज्ञानजनकलिपिकरणम्। आख्यातार्थः कृतिः। तथा च विघ्नध्वंसोद्देश्यककृतिसाध्याभिन्नमंगलकर्मकशिष्यशिक्षा-फलक"नूतनेत्यादिग्रन्थाभिन्न" निबन्धनानुकूलकृतिमान् कारिकावलीकार इति विघ्नविघाता-येत्यादिवाक्याद्बोधः।

३ कार्याधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकमिति तत्त्वम्।

रेकव्यभिचारश्च नास्तिकग्रन्थेषु तत्र विनापि मङ्गलं समाप्तेः। तथा च प्रवृत्तिं प्रतीष्ट-साधनतानिश्चयस्य कारणतया मङ्गले समाप्तिविघ्नध्वंसकामस्य प्रवृत्तिर्न स्यात्, तत्र समाप्तिविघ्नध्वंसरूपेष्टसाधनत्वनिश्चयाभावात्, इष्टसाधनताभ्रान्तिमूला वा प्रवृत्तिः स्यादित्याशंकते **नन्विति**। नन्वित्याशङ्कायाम्। नव्यमतमाक्षिपति **न विघ्नध्वंसं प्रतीति**। **कारणं**—कारणत्वेन निश्चितम्[1]। प्राचीनमतमाक्षिपति **नवेति**। मङ्गलमित्यनुषज्यते। **समाप्तिं प्रतीति** विघ्नध्वंसद्वारा इति शेषः। कारणमिति[2]। कारणताग्रहविरोधि[3]व्यतिरेकव्यभिचारं दर्शयति **विनापि मङ्गलमिति**। मङ्गल-विरहेऽपीत्यर्थः। अनेन कारणाभावः सूचितः। निर्विघ्नपरिसमाप्तिदर्शना-दित्यनेन च विघ्नध्वंसरूपस्य समाप्तिरूपस्य वा कार्यस्य सत्वं सूचितम्। तथा च कारणाभावे कार्यसत्वरूपव्यतिरेकव्यभिचार इति भावः। **निर्विघ्नेति**। विघ्न-स्याभावो निर्विघ्नम् अर्थाभावेऽव्ययीभावः। अभावश्चाऽत्र ध्वंसरूपो विवक्षितः। निर्विघ्नं परिसमाप्तिः निर्विघ्नपरिसमाप्तिः। निर्विघ्नमित्यस्य विघ्नध्वंसादित्यर्थः। **अव्ययादाप्सुप** इति पञ्चम्या लोपात्। उत्तरत्वं पञ्चम्यर्थः। विघ्नध्वंसपूर्वक[4]समाप्ति-दर्शनादित्यर्थः। तथा च मङ्गलविरहेऽपि नास्तिकग्रन्थसमाप्तिविरोधिनः पापविशेष-रूपविघ्नस्य ध्वंसदर्शनात्, नास्तिकग्रन्थघटकीभूतचरमवर्णध्वंसरूपसमाप्तिदर्शना-च्चेति समुदितार्थः[5]। इदमुपलक्षणम्—कादंबर्यादिग्रन्थे मङ्गलसत्वेऽपि समाप्तेरदर्शना-

---

१ मङ्गलं "विघ्नध्वंसं प्रति" अनन्यथासिद्धत्वे सति स्वरूपेण विघ्नध्वंसाधिकरणवृत्ति-भेदप्रतियोगितानवच्छेदकभिन्नमिति फलितम्।

२—तथा च मङ्गलं "समाप्तिं प्रति" अनन्यथासिद्धत्वे सति समाप्त्यधिकरणवृत्तिभेद-प्रतियोगितानवच्छेदकभिन्नमिति फलितम्।

३—ननु अन्वयव्यभिचारग्रहव्यतिरेकव्यभिचारग्रहयोः कथं कारणताग्रहविरोधित्वमिति-चेद्, इत्थम्—अन्यथासिद्धिशून्यत्वे सतिकार्याव्यवहितप्राक्क्षणे कार्याधिकरणवृत्तिभेदप्रति-योगितानवच्छेदकत्वं हि कारणत्वम्। तत्राऽन्वयव्यभिचारग्रहः कारणताघटकाऽन्यथासिद्धि-शून्यत्वग्रहविरोधी अवश्यक्लृप्तनियतपूर्ववर्तिभिन्नत्वरूपपञ्चमान्यथासिद्धत्वस्यैव निश्चयस्य जननात्, तथाचाऽन्यथासिद्धिशून्यत्वघटितकारणताग्रहविरोधित्वम्। व्यतिरेकव्यभिचारस्य तु कार्याधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वरूपतया तन्निश्चयस्य ग्राह्याभावावगाहितया कारणताग्रहविरोधित्वं बोध्यम्।

४ विघ्नध्वंसपूर्वकेति कथनेन विघ्नध्वंसेपि व्यभिचारः संपादितः। न च ग्रन्थसमाप्तौ विघ्नात्यन्ताभावपूर्वकत्वमेवेति न विघ्नध्वंसे व्यभिचारसंपादनमिति वाच्यम्। अग्रे वाच्यत्वात्।

५ मङ्गलं न विघ्नध्वंसकारणं विघ्नध्वंसवन्नास्तिकात्मवृत्तिभेदप्रतियोगितावच्छेद-कत्वात्, मङ्गलं न समाप्तिकारणं समाप्त्यधिकरणनास्तिकात्मवृत्तिभेदप्रतियोगितावच्छेदकत्वा-दिति हेतुद्वयं फलितम्। अतो यथाश्रुते साध्यद्वयेवोर्वैयधिकरण्येपि न क्षतिः।

दन्वयव्यभिचारोपि बोध्यः[१]। तथा च यस्य पुरुषस्य प्रमत्तकर्तृकसमाप्तिस्थले ऐहिकमङ्गलविरहनिश्चयो मङ्गलसत्त्वेऽपि समाप्तिविरहेण लोकावगतकारणेनैव समाप्तेर्वक्तव्यतया समाप्तिं प्रति मङ्गलस्यान्यथासिद्धत्वग्रहश्च विद्यमानः तेन पुरुषेण तदानीं समाप्तिहेतुत्वस्य मङ्गले प्रत्यक्षतो निश्चेतुमशक्यत्वादिति तत्वम्।

ननु विघ्नविघाताय कृतं मङ्गलमिति ग्रन्थेन मङ्गलं विघ्नध्वंसं प्रति कारणमिति सूचितम्, तदुपरि मङ्गलं न विघ्नध्वंसं प्रति कारणमित्याक्षेपस्यैव युक्ततया न वा समाप्तिं प्रति कारणमित्याक्षेपोऽसंगत एवेति चेन्न। विघ्नविघातायेत्यस्य विघ्नध्वंसपूर्वकसमाप्तये इत्यर्थात्। वस्तुतो मङ्गलं नाचरणीयं निष्फलत्वादित्यनुमाना देव वादिना मङ्गलाचरणमाक्षिप्यते—तत्र निष्फलत्वसिद्धिर्यावत्फलविशेषशून्यत्वेन हेतुना कार्या मङ्गलं निष्फलं यावत्फलविशेषशून्यत्वादित्यनुमित्याकारः। यावत्फलविशेषशून्यत्वस्य निष्फलत्वप्रयोजकत्वं निर्विवादमेव, यावद्विशेषाभावस्य सामान्याभावहेतुत्वात्। तत्रापि पशुपुत्रहिरण्यादिफल "जनकत्व" शून्यत्वस्य मङ्गले सर्वसम्मतत्वेन प्राचीननव्याभ्यां समाप्तिविघ्नध्वंसयोरेव फलत्वेनाऽङ्गीकारेण तदुभयफल "जनकत्व" शून्यत्वसाधनेनैव यावत्फलविशेष "जनकत्व" शून्यत्वसिद्धिः। तथा च यावत्फलविशेष "जनकत्व" शून्यत्वसाधनायैव न वा समाप्तिं प्रति इत्यादिग्रन्थस्तेन नाऽसंगतिरिति ध्येयम्।

एतावता मङ्गले निष्फलत्वसाधनाय विघ्नध्वंसजनकत्वाभावः समाप्तिजनकत्वाभावो वाऽन्वयव्यतिरेकव्यभिचारहेतुना साधितः, परन्तु नास्तिकात्मनि जन्मान्तरीयमङ्गलस्य शिष्यानुजिघृक्षाऽभावेन मङ्गलप्रतिपादकश्लोकाऽकरणेपि जन्मान्तरीयकर्मणो निष्फलत्वकथनेऽपि च ऐहिककर्मणो निष्फलत्वकथने क्षुत्तृष्णानिवृत्त्यर्थमन्नभक्षणजलपानयोरपि प्रवृत्त्यनुपपत्त्या समाप्तिरूपैहिकफलार्थं मङ्गलस्य नास्तिकेनापि करणावश्यकतया व्यभिचाराप्रसक्तेः। परकीयचित्तवृत्तेर्निर्णेतुमशक्यत्वेन मङ्गलकरणस्य सन्देहेऽपि व्यतिरेकव्यभिचारस्य सन्दिग्धत्वात्, कादम्बर्यादिकर्त्तुः मङ्गलसत्वे आलस्यादिदोषवशेनाऽऽयुषः प्रमाणाभावेन च सहकार्यभावादपि ग्रन्थसमाप्त्यभावेनान्वयव्यभिचारस्यापि सन्दिग्धत्वात्। तथाचाऽन्वयव्यतिरेकव्यभिचाररूपहेतोर्निश्चयाभावेन नोक्तहेतुभ्यां विघ्नध्वंसजनकत्वाभावस्य समाप्तिजनकत्वाभावस्य च साधनं संभवतीत्याशयेन पूर्वपक्षं दूषयति नेति। "अन्वयव्यतिरेकव्यभिचारसन्देहेन" समाप्ति-विघ्नध्वंस-जनकत्वाभावसाधकहेतोः संशयादिति शेषः। तेन हेत्वनुक्तेर्न न्यूनतेति भावः।

अन्वयव्यतिरेकव्यभिचारग्रहसत्त्वे ऽन्वयव्यतिरेकसहचारग्रहाऽसंभवेनाऽन्वय-व्यतिरेकव्यभिचारसहकृतप्रत्यक्षेण मंगलविघ्नध्वंसयोर्मंगलसमाप्त्योर्वा कार्य-

---

१ तथा च मङ्गलं न विघ्नध्वंसकारणं विघ्नध्वंसं प्रति अवश्यक्लृप्तनियतपूर्ववर्त्तिभिन्नत्वरूपान्यथासिद्धत्वात्। मङ्गलं न समाप्तिकारणं समाप्तिं प्रति अवश्यक्लृप्तनियतपूर्ववर्त्तिभिन्नत्वरूपान्यथासिद्धत्वाच्चेति हेतुद्वयं बोध्यम्।

कारणभावप्रत्यक्षं माभूत्, कारणताप्रत्यक्षे एव व्यतिरेकसहचारसंशयस्य प्रतिबन्धकत्वात्। अनुमानेन तु कारणत्वग्रहो भवितुमर्हति। तथा हि–मंगलं बलवद-निष्टाननुबन्धित्वे सति इष्टसाधनं बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनत्वभ्रमाजन्य-कृतिसाध्यत्वात् दर्शादिवदित्यनुमानेन मंगले समाप्तीतरफलसाधनत्वबाधनिश्चय-सहकृतेन समाप्तिसाधनत्वनिश्चयात्, न चोक्तानुमानेन सामान्यतः बलवदनिष्टाननु-बन्धीष्टसाधनत्वसिद्धावपि कथं समाप्तिसाधनत्वसिद्धिः, व्यापकतावच्छेदकरूपेणै-वानुमितिर्भवतीति नियमादिति वाच्यम्। तादृशनियमस्येतरबाधादिभिन्न-विषयत्वात्[1]। अथवा मङ्गलं समाप्तिसाधनं समाप्तीतरफलासाधनत्वे सति फलसाध-नत्वादित्यनुमानेन समाप्तिसाधनत्वसिद्धिर्बोध्या। इदमेव परिशेषानुमानमुच्यते। न च समाप्त्यन्यासाधनत्वरूपविशेषणाऽसिद्धिरिति वाच्यम्। मंगलं न समाप्त्यन्य-फलसाधनं समाप्त्यन्यफलोद्देश्यककृत्यसाध्यत्वात्, यद् यदन्यफलोद्देश्यककृत्यसाध्यं तन्न तदन्यफलसाधनं यथा रोगनिवृत्त्यन्यफलोद्देश्यककृत्यसाध्यं औषधपानं रोग-निवृत्त्यन्यफलासाधनं दृष्टं, तथा चेदं-तस्मात्तथेत्यनुमानेन मंगले समाप्त्यन्यफला-साधनत्वसिद्ध्या विशेषणासिद्धिनिरासात्।

## अविगीतशिष्टाचारविषयत्वेन सफलत्वे सिद्धे

उत्तर–अविगीत (अनिन्दित) जो शिष्टों का आचार (कृति) उसका विषय होने से अर्थात् "अविगीतशिष्टाचारविषयत्वहेतु" के द्वारा मंगल में सफलत्व का अनुमान करेंगे (मंगलं सफलम् अविगीत 'शिष्टाचार' विषयत्वात् यागादिवत्) इससे मंगल में सफलत्व सिद्ध हुआ।

मंगलं समाप्तिसाधनं समाप्तीतरफलासाधनत्वे, सति सफलत्वादिति परिशेषानुमाने विशेष्यासिद्धिनिरासायाह **अविगीतशिष्टाचारविषयत्वेनेति**। हेतुनेति शेषः। **सफलत्वे सिद्धे** इति। तथा च मंगलं सफलं अविगीतशिष्टाचार-विषयत्वादित्यनुमानेन मंगले सफलत्वसिद्धिरिति भावः। सफलत्वं च फलसाधनत्वं तेन न पूर्वस्माद्भेदः।

---

१—अथ महानसीयवह्नीतरवह्न्यभाववान्पर्वत इत्याद्यप्रामाण्यज्ञानानास्कन्दितनिश्चय-दशायां वह्निव्याप्यधूमवान्पर्वत इति सामान्यपरामर्शादपि महानसीयवह्निमात्रनिष्ठविधेय-ताशाल्यनुमितिर्जायते इति सकलतान्त्रिकमतम्। सा चाऽनुमितिः किं 'वह्नित्वेन' महानसीय-वह्निमात्रनिष्टविधेयताशालिनी महानसीयवह्नित्वेन वेति। अत्रोपाध्यायाः। वह्नित्वेनैव तादृशा-विधेयताशाल्यनुमितिर्जायते, यद्धर्मे व्यापकतावच्छेदकत्वं गृह्यते तद्धर्मावच्छिन्नविधेताकानुमिति-रिति नियमात्। नचैवं महानसीयवह्निभाववानिति बाधनिश्चयस्य तत्र प्रतिबन्धकत्वानुपपत्तिः, वह्नित्वावच्छिन्नविधेयताकानुमितौ तस्याऽप्रतिबन्धकत्वादिति वाच्यम्। इष्टापत्तेः। विशेष-रूपेण सकलरूपाभावनिश्चयेपि रूपसामान्यसंशयानुभवात्, समानप्रकारत्वेनैव विरोधिता न तु समानविषयकत्वेन, तथा च सामान्यतो व्यापकतावच्छेदकरूपेण व्यापकत्वावगाहिपरा-मर्शात्तेन रूपेण साध्यानुमितौ कथं विशेषबाधो दोषतामासादयेत्। विशेषरूपेणानुमितिस्तु तेन

ननु किं तावन्मंगलत्वम्! न च समाप्तिजनकतावच्छेदकतया सिद्धो जातिविशेष इति वाच्यम्। मंगलस्य कायिकवाचिकमानसिकभेदेन नानात्वतया करशिरःसंयोग-नमःशब्दप्रयोग-मानसज्ञानविशेषरूपत्वेन संयोगत्व-शब्दत्व-ज्ञानत्वादिभिः सांकर्यात्। न च करशिरःसंयोगाद्यन्यतमत्वं तदिति वाच्यम्। तस्याऽसिद्धिनिरूपकत्वेन जनकतानवच्छेदकत्वात्। अन्यथा तृणारणिमणीनामन्यतमत्वेन हेतुत्वे मीमांसकानां

---

रूपेण व्यापकताज्ञानविरहादेव न जायते। नहि सामान्यरूपेण व्यापकत्वबुद्धेरपि इतरबाधबलाद्विशेषरूपेण साध्यप्रकारकानुमितिसामग्रीत्वमित्यत्र किंचित्प्रमाणमीक्षामहे।

अथेच्छा द्रव्याश्रिता गुणत्वाद् रूपवदित्यादौ इच्छायां पृथिव्याद्यष्टद्रव्यवृत्तित्वबाधावतारदशायां जायमानद्रव्याश्रितत्वानुमितिः पृथिव्याद्यष्टकभिन्नद्रव्याश्रितत्वं विषयीकरोति तदुत्तरं तादृप्येण संशयानुत्पादस्य सर्वानुभवसिद्धत्वादिति व्यापकतानवच्छेदकरूपेणाप्यनुमितेः स्वीकार आवश्यकः, तथा च तादृशानुमानेन विशेषरूपावच्छिन्नसिद्धिस्तत एव संशयनिराशादिति चेन्न। व्यापकतानवच्छेदकरूपेणानुमितेः सिद्धान्तविरुद्धत्वात्। अत एव मणिकृतैव इतरबाधसहकृतगुणत्वादिहेतुकानुमित्याऽष्टद्रव्यातिरिक्तव्यत्वसिद्धिमाशंक्य व्यापकतावच्छेदकरूपेणैवानुमितिरिति नियमेन पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादिव्यतिरेकिहेतुना तत्सिद्धिः सिद्धान्तिता। इच्छाश्रये द्रव्यमष्टद्रव्यातिरिक्तं इच्छाश्रयत्वात् पृथिव्यादित्वेबाधसत्वादित्यनुमानेन साध्यप्रसिद्धिरपि संपादिता। न चानुमाने तुल्यवितिवेद्यताविरहादिच्छाश्रयद्रव्ये पृथिव्यादिभिन्नत्वस्योक्तानुमानादेव तुल्यवितिवेद्यतया पृथिव्यादिभिन्नद्रव्यवृत्तित्वभानसंभवेन व्यतिरेकवैयर्थ्यप्रसंगादित्याहुः।

दीधीतिकृदनुयायिनस्तु अनुमानान्तरकल्पनापेक्षया लाघवेन इच्छा द्रव्याश्रिता गुणत्वादित्यनुमानस्यैव विशेषरूपेण द्रव्याश्रितत्वसाध्यकत्वं कल्पयितुमुचितम्। न चेतरबाधघटितसामग्र्यतरस्य विशेषरूपेणानुमित्युत्पादप्रयोजकत्वकल्पनापेक्षयाऽन्यत्र क्लृप्तसामग्रीतोऽनुमित्यन्तरकल्पनमेवोचितमिति वाच्यम्। अनुमित्यन्तरनिर्वाहकव्याप्त्यादिकल्पनापेक्षया लाघवेन क्लृप्तानुमितेर्विशेषप्रकारकत्वसिद्धौ इतरबाधादेस्तत्प्रयोजकत्वकल्पनागौरवस्य फलमुखत्वेनादोषत्वात्। व्यापकतावच्छेदकरूपेण व्यापकानुमितिरिति प्रवादो निर्युक्तिकत्वादश्रद्धेयः। अत एव च कर्तुरेकत्वे लाघवमित्याकारकलाघवज्ञानसहकृतसकर्तृकत्वव्याप्यवत्ताज्ञानात् क्षितिरेककर्तृकेत्यनुमित्युत्पादस्तदनन्तरं क्षितिकर्त्ता एकः अनेको वेति संशयानुत्पादः सर्वानुभवसिद्धः। न च तद्धर्मिकलाघवज्ञानस्य तद्विपरीतकोटिविरोधितायाः क्लृप्तत्वात्तत एव संशयनिरासः संभवतीति वाच्यम्। लाघवज्ञाननाशेपि अनुमितिसत्वे संशयानुदयात् उत्तरकालं संशय निवृत्तये लाघवज्ञानान्तरकल्पनापेक्षया ऽनुमितावेव लघ्वर्थविषयकत्वकल्पनौचित्यात्। न च विशेषरूपेण व्याप्त्यवगाहिपरामर्शस्य तादृप्येणानुमितिहेतुतायाः क्लृप्तत्वात्तं विना कथं तेन रूपेणानुमितिरिति वाच्यम्। तादृशपरामर्शघटिताया इतरबाधघटितसामग्र्या अपि विशेषरूपेणानुमितिजनकत्वोपगमात् तादृशसामग्र्यास्तादृशानुमितिजनने तादृशसामग्रीविरहस्याऽकिंचित्करत्वात्। महानसीयत्वविशिष्टवह्न्यादिवैशिष्ट्यावगाहिताया विशेषरूपेण व्यापकत्वघजन्यतावच्छेदकत्वोपगमान्महानसीवह्नीनरवयभाववानित्यादिबाधीबन्यानुमितिपूर्वकाले च नियमतो-

कारणतावच्छेदकतया शक्तेः अस्माकं कार्यतावच्छेदकतया वैजात्यस्य कल्पनायाः सिद्धान्तसिद्धाया अनुपपत्तेरिति चेन्न। संयोगत्वादिव्याप्या नानैव मंगलत्वजातिरिति स्वीकारात्। वस्तुतो ज्ञानविशेषे एव मंगलपदस्य शक्तिः, अन्यत्र तु लक्षणैव। तथा च विघ्नान्यत्वे सति विघ्नध्वंससाधनत्वं मंगलत्वम्। विघ्नेऽतिव्याप्तिवारणाय सत्यन्तम्। घटादावतिव्याप्तिवारणाय विशेष्यदलम्। नन्वेवमपि कार्यमात्रसाधारणकारणकालादृष्टदिगीश्वरतज्ज्ञानादावतिव्याप्तिरिति चेन्न। विघ्नान्यत्वे सति विघ्नध्वंसासाधारणकारणत्वस्य वाच्यत्वात्। विघ्नध्वंसाऽसाधारणकारणत्वं च कार्यत्वानवच्छिन्नविघ्नध्वंसनिष्ठकार्यतानिरूपितकारणतावत्त्वे सति ज्ञानत्वमिति दिक्।

सफलत्वं साध्यम्। तच्च बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनत्वम्। न च सत्यन्तं व्यर्थम्। प्रवर्त्तकज्ञानसंपादनाय तदुपादानात्। मधुविषसंपृक्तान्नभोजनादौ तृप्तिरूपेष्टसाधनताज्ञानसत्त्वेपि प्रवृत्त्यभावेन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानस्यैव प्रवर्त्तकत्वात्। इष्टसाधनत्वमित्यत्र इष्टे वेदबोधितत्वमपि विशेषणीयम्, नातः स्वध्वंसफलकत्वमादाय सिद्धसाधनम्। इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं सत्यन्तार्थः।

अविगीतशिष्टाचारविषयत्वं हेतुः। अविगीतो यः शिष्टाचारस्तद्विषयत्वादित्यर्थः। यदविगीतशिष्टाचारविषयीभूतं तत्सफलं यथा दर्शादिः, तथा चेदं तस्मात्तथेति सफलत्वसिद्धिर्बोध्या। अत्र यत् अविगीतत्वे सति यदीयशिष्टाचारविषयीभूतं भवति तत् तत्पुरुषीयेष्टसाधनं भवति इति रीत्या यद्विशेषयोरिति न्यायेन मंगलसामान्यस्येष्टसाधनत्वं सिद्ध्यतीति सिद्धे इत्यन्तमूलाशयः।

श्येनेनाऽभिचरन्यजेतेतिश्रुत्या श्येननामकयागस्य शत्रुनाशकत्वप्रतिपादनात् श्येनयागे व्यभिचारवारणाय हेतावविगीतेति। अविगीतत्वं च बलवदनिष्टाननुबन्धित्वं—तच्चाऽऽचारविशेषणम्। तादृशयागस्य नरकसाधत्वेन न व्यभिचारः, अभिचारे प्रायश्चितोपदेशात्। निष्फले जलताडनादौ व्यभिचारवारणाय शिष्टत्वनिवेशः। शिष्टत्वं च फलसाधनतांशे भ्रान्तिरहितत्वम्। शिष्टपदं शिष्टसमवेतपरम्। न च तस्याऽवितगीत्वाभावः, न विप्रः क्षणिको भवेत्, वृथाचेष्टां न कुर्वीत, निष्फ-

---

विशिष्टविशेषणकज्ञानानवस्थानात् विशेष्ये विशेषणमितिरीत्यैवानुमितेस्ततोऽभ्युपगन्तव्यतया परामर्शविशेषस्येतरबाधादिजन्यानुमितौ व्यभिचारानवकाशात्।

वस्तुतः कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशादेव परामर्शविशेष-लाघवज्ञाने-तरबाधज्ञानानां परस्परं न व्यभिचारः। यदि च विशिष्टविशेषणावगाहिज्ञानं प्रत्येव विशिष्टं विशेषणधियो हेतुता न तु विशिष्टप्रतियोगिकविलक्षणसंसर्गावगाहित्वं तज्जन्यतावच्छेदकं, अतएवाऽप्रसिद्ध "अभाव" साध्यकेपि साध्यविशेष्यकानुमितिरिति स्वीकुर्वन्ति इत्युच्यते तदाऽप्रसिद्ध "अभाव" साध्यकव्यतिरेकिविलोपो दुर्वारः। यदि च प्रत्यक्षत्वमेव विशिष्टविशेषणधीजन्यतावच्छेदकं न तु ज्ञानत्वं अतएव विशिष्टावान्तरवाक्यार्थज्ञानं विनापि महावाक्यार्थबोध इत्युपेयते तदापि प्रतियोगिव्यापकाभावहेतुकाऽप्रसिद्धाभावसाध्यकानुमानवदितरबाधबलादप्रसिद्धविशिष्टसाध्यकं सामान्यतोदृष्टानुमानमपि निष्प्रत्यूहमेव।

**लानि च कर्माणि नारभेत विचक्षणः** इत्यादिना निषेधादिति वाच्यम्। अस्य पर्युदासत्वात्, निषेधविधेः वैधरागजप्राप्तिपूर्वकत्वात्, प्रकृते तु वृथाचेष्टां कुर्वीतेति वाक्यानाकलनेन निष्फले कर्मणि रागतः प्रवृत्त्यभावेन च निषेधविध्यसंभवात्। एतेन शिष्टपदं स्पष्टार्थमिति दीपिकाकारोक्तिर्विभावनीया। **रामरुद्रीकृतस्तु** पश्वादिकृतनिष्फले गमनादौ व्यभिचारवारणाय **शिष्टपदम्** विधिनिषेधयोर्नैराधिकारित्वेन तदीयवृथाचेष्टाया निषेधाविषयत्वेन बलवदनिष्टाजनकत्वादिति प्राहुः[1]। नचाऽऽचारपदस्य क्रियार्थकत्वे तद्विषयत्वस्याऽप्रसिद्धिरिति वाच्यम्। आचारपदस्य प्रवृत्त्यर्थकत्वात्। न च फले व्यभिचारः तस्याप्युद्देश्यतयाऽविगीतप्रवृत्तिविषयत्वादिति वाच्यम्। साध्यत्वाख्यविषयत्वस्य हेतुत्वोपगमात्। प्रवृत्तेरुद्देश्यत्वाख्यविषयताशालिनि फले तथाविधसाध्यत्वाख्यविषयताविरहेण न व्यभिचारः। एवं च मंगलं बलवदनिष्टाननुबन्धित्वे सति वेदबोधितेष्टसाधनतावत् बलवदनिष्टाननुबन्धिशिष्टसमवेतकृतिविधेयत्वाद्दर्शयागवदित्यनुमानं फलितम्।

ननु मंगलं समाप्तिसाधनं समाप्त्यन्याऽसाधनत्वे सति सफलत्वादित्यनुमानेन समाप्तिकारणत्वं साधितम्। तत्र समाप्त्यन्याऽसाधनत्वे वादिनामविवाद एव। मंगलं सफलं अविगीतशिष्टाचारविषयत्वादित्यनुमानेन विशेष्यासिद्धिनिरासोपि कृतः। सफलत्वं च बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनत्वम्। परन्तु मंगले समाप्तिसाधनत्वसिद्धावपि निर्विघ्नपरिसमाप्त्यर्थं ग्रन्थादौ मंगलमेव कर्त्तव्यमिति नियमे मानाभावः, प्रायश्चित्तादिनापि विघ्ननाशसंभवात्ततः समाप्त्युत्पत्तेश्च। नाप्युक्तानुमानात्समाप्तिजनकतासिद्धिः, उक्तानुमितेः स्वतन्त्रप्रमाणाऽमूलकत्वेनाऽप्रामाण्यशंकास्कन्दितत्वादिति चेन्न। मंगलं वेदबोधितकर्तव्यताकम्, अलौकिकाविगीतशिष्टाचारविषयत्वाद्दर्शवदित्यनुमानेन वेदानुमानात्। तादृशी च श्रुतिः **समाप्तिकामो मंगलमाचरेदित्याकारिका**। अत्र यद्वक्तव्यं तद्दीपिकायां मुक्तम् श्रीचरणैः। एवं **मंगलादीनि मंगलमध्यानि मंगलान्तानि शास्त्राणि प्रथन्ते** इति श्रुतिरपि मंगले प्रमाणम्।

**अत्रेदं बोध्यम्**। मंगलस्य समाप्तिहेतुत्वे न प्रत्यक्षं प्रमाणम्, अन्वयव्यतिरेकसहचारनिश्चयसहकृतस्यैव प्रत्यक्षस्य कारणताग्राहकतया नास्तिकग्रन्थसमाप्त्या तदसंभवात्। नापि श्रुतिः, आनुपूर्वीविशेषनिर्णयाभावेन तस्या अबोधकत्वात्। अतोऽनुमानं प्रमाणतयोपन्यस्तम्। व्यतिरेकव्यभिचारसन्देहस्य साध्यसन्देहपर्यवसन्नतया अनुमितौ साध्यसन्देहस्यानुगुणत्वाज्जन्मान्तरीयसन्देहेन व्यभिचारनिश्चयाभावात्। अत एव साध्यसंशयः पक्षतेति प्राचीनाः। वेदात्कर्तव्यतानिश्चयोऽपि उपायस्योपायान्तरादूषकत्वाच्चेति ध्येयम्।

**सफलत्वे सिद्धे इति**। सफलत्वसिद्ध्यनन्तरमित्यर्थः।

प्राचीनमतस्य निराकरणीयतया तन्मतनिराकरणपूर्वकं नवीनमतं व्यवस्थापनीयमित्यभिप्रायवान् पूर्वपक्षे पश्चाद्दूषितमपि प्राचीनमतमादौ व्यवस्थापयति तत्रेत्या-

दिना। एतेन "ननु मंगलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारण" मिति पूर्वपक्ष-ग्रन्थे मंगलस्य नवीनमतसिद्धविघ्नध्वंससाधनत्वमेवादौ निराकृत्य प्राचीनमतसिद्ध-समाप्तिसाधनत्वं निराकृतमिति सिद्धान्तेऽपि आदौ नवीनमतमेव व्यवस्थापनीयमिति शंका निराकृता। **तत्र चेति**। मंगले चेत्यर्थः। सप्तम्यर्थो विशेष्यकत्वम्। **फलजिज्ञासायां** विशेषतः फलजिज्ञासायाम्। फलत्वव्याप्यधर्मावच्छिन्ननिरूपितसाधनत्वजि-ज्ञासायामिति यावत्। अनेन फलत्वेन फलसाधनत्वज्ञानमात्रस्य प्रवृत्त्यजनकत्वात्, फलत्वव्याप्यधर्मावच्छिन्ननिरूपितसाधनत्वज्ञानस्यैव प्रवृत्तिजनकत्वात् मंगलं स-फलमित्याकारकफलत्वावच्छिन्ननिरूपितसाधनत्वविधेयकमंगलोद्देश्यकानुमितिमात्रेण मंगले प्रवृत्तिः प्रेक्षावतां न स्यादिति सूचितम्। जिज्ञासायामित्यत्र कालीनत्वं सप्तम्यर्थः, अस्य कल्प्यते इति कल्पनापदार्थेऽन्वयः। तथा च तादृशजिज्ञासा-कालीनकल्पनाविषयीभूतं फलं समाप्तिरेवेति भावः। केचित्तु- **तत्र चेति फले चेत्यर्थः**। जिज्ञासायामिति विशेषधर्मप्रकारेण मंगलीयफलजिज्ञासायामित्यर्थः। शेषं पूर्ववदित्याहुः।

ननु फलत्वव्याप्यधर्मावच्छिन्ननिरूपितसाधनत्व-फलत्वव्याप्यधर्मावच्छि-न्नान्यतरविषयकजिज्ञासासत्त्वेपि फलविशेषसाधनत्व-फलविशेषान्यतरसिद्धिः कुत इत्याशंक्येतरबाधबलादुक्तविशेषसिद्धिरित्याह **संभवतीति**। न चाऽदृष्टफल-कल्पनाया अन्याय्यत्वादित्येव वक्तव्यमिति वाच्यम्। तथा सति गंगास्नानादीना-मप्यदृष्टार्थकता न स्यात्, तदुक्तौ च तत्र दृष्टफलासंभवेनाऽदृष्टकल्पनात्। फले दृष्टत्वं च उपायानुष्ठानावच्छेदकशरीरावच्छिन्नभोगविषयत्वम्। अदृष्टत्वं च तत्र उपाया-वच्छेदकशरीरभिन्नशरीरावच्छिन्नभोगविषयत्वम्। तथा च मंगलस्य दृष्टफलकत्वे संभवति[1] सतीत्यस्य मंगलनिष्ठमंगलानुष्ठानावच्छेदकशरीरावच्छिन्नभोगविष-यपशुपुत्रविघ्नध्वंससमाप्त्याद्यन्यतमफलसाधनत्वे संभावनाविषये सतीत्यर्थः। **अदृष्टफलकल्पनाया** इति। **अदृष्टे स्वर्गादौ**—फलत्वकल्पनाया इत्यर्थः। **अन्याय्य**-

**तत्र च फलजिज्ञासायां संभवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वादुपस्थितत्वाच्च समाप्तिरेव हि फलं कल्प्यते।**

वहां फल की जिज्ञासा हुई कि मंगल का दृष्टफल मानना या अदृष्टफल ! तो इस प्रश्न का उत्तर देते हैं कि दृष्टफल यदि संभव हो सके तो अदृष्टफल की कल्पना अन्याय्य है अतः प्रकृत में समाप्तिरूप दृष्टफल जब कि उपस्थित है तो वही मंगल का फल (कार्य) मानना चाहिये।

---

१ दृष्टफलकत्वे संभवत्वं च मंगलवृत्तिभेदप्रतियोगितावच्छेदकत्वम्। अवच्छेदकता च स्वनिष्ठापादकताकायत्तयविशेष्यत्वसंबन्धावच्छिन्ना बोध्या। अस्ति चैतन्मंगलनिष्ठदृष्ट-फलकत्वे मंगलं यदि दृष्टफलकत्ववत्स्यात्तदा कापि आपत्तिर्नास्तीति तादृशविशेष्यत्वस्याऽन्यत्र गंगास्नानादौ वर्तमानतया तादृशविशेष्यत्वसंबन्धेन दृष्टफलकत्ववान्नेति भेदस्य मंगले सत्वेन तादृशभेदप्रतियोगितावच्छेदकत्वस्य दृष्टफलकत्वे सत्वादिति ध्येयम्।

त्वादिति। अनुपस्थितोपस्थितिकल्पने गौरवात् अन्यथा गंगास्नानस्येव दृष्टफलक-स्यापि अदृष्टफलकत्वापत्तेरिति भावः। तथा च मंगलानुष्ठानावच्छेदकशरीरावच्छेदा-वच्छिन्नभोगविषयफल(स्वर्ग)साधनत्वविधेयकानुमितेरप्रामाण्यप्रकारकज्ञानविषयत्वा-दिति यावत्। ननु मंगलविशेष्यकनिरुक्तदृष्टफलकत्वप्रकारकसंभावनायां समाप्ति-विघ्नध्वंसातिरिक्तदृष्टफलविषयकैवानुमितिर्भवतु इत्यत आह उपस्थितत्वाच्चेति। ग्रन्थादौ मंगलकर्त्तुर्मंगलानुष्ठानसमये ग्रन्थसमाप्ति–तत्प्रतिबन्धकविघ्नध्वंसयोरिच्छाविषयत्वेन स्मृतिविषयत्वादित्यर्थः। इतरेषां फलानामनुपस्थितत्वादिति यावत्।

केचित्तु उपस्थितत्वादित्यस्य आरब्धकर्माङ्गतयोपस्थितत्वादित्यर्थः। तथा च यद्यदारब्धकर्माङ्गं तत्तदारब्धकर्मफलफलकं यथा प्रयाजादि। ननु मंगलस्याऽऽरब्ध-कर्माङ्गत्वे मानाभाव इति चेत्। मंगलं आरब्धकर्माङ्गं तत्फलार्थितयाऽभ्रान्तैस्तत्पूर्व-मनुष्ठीयमानत्वात्प्रयाजवदित्यनुमानस्य प्रमाणत्वादिति प्राहुः।

तथा च संभवति दृष्टफलकत्वे इत्याद्युपस्थितत्वाच्चेत्यन्तफक्किकया बलवदनिष्टान-नुबन्धीष्टसाधनत्वव्याप्याऽविगीतशिष्टाचारविषयत्ववन्मंगलमिति परामर्शात् निर्विघ्न-परिसमाप्तीतरफलसाधनत्वाभाववन्मंगलमितीतरबाधसहकृतात्, निर्विघ्नपरिसमाप्ती-तरफलसाधनत्वाभावविशिष्टबलवदनिष्टाननुबन्धीष्टसाधनत्वव्याप्याऽविगीतशिष्टाचार-विषयत्ववन्मंगलमिति परामर्शाद्वा मंगलं समाप्तिसाधनमिति परिशेषानुमितिर्जायते। यथा पर्वते पर्वतीयवह्नीतरवह्निर्नास्तीति बाधसत्वे पर्वतीयवह्नीतरवह्न्यभावविशिष्टवह्नि-व्याप्यधूमवांश्चायमिति परामर्शेण पर्वतीयवह्निमानित्याकारिका पर्वतो वह्निमानित्या-कारिका वह्नित्वावच्छिन्नपर्वतीयवह्निविधेयकानुमितिर्भवति, तथा बलवदनिष्टाननु-बन्धीष्टसाधनत्वव्याप्याऽविगीतशिष्टाचारविषयत्ववन्मंगलमिति परामर्शेण मंगलं बलवदनिष्टाननुबन्धीष्टसाधनमित्याकारिका बलवदनिष्टाननुबन्धीष्टसाधनत्वत्वावच्छि-न्नसमाप्तिविधेयकानुमितिः। "इतरबाधबलाद् व्यापकतानवच्छेदकप्रकारेणाऽनुमिति-स्वीकारे तु" मंगलं समाप्तिसाधनमित्याकारिका वाऽनुमितिरुत्पद्यते इत्याह **समाप्तिरेव हि फलं कल्प्यते** इति। "समाप्तिविघ्नध्वंसान्यतरत्" **फलं**-मंगलजन्यं **कल्प्यते**-अनुमीयते-परिशेषानुमितिविषयीक्रियते इत्यर्थः। तथा च समाप्तिविघ्नध्वं-सान्यतरस्य मंगलजन्यत्वलाभे मंगले तुल्यवित्तिवेद्यतया समाप्तिविघ्नध्वंसान्यतरसाध-नत्वमनुमीयते इति फलितोऽर्थः। समाप्तिरेवेत्येवकारेण पशुपुत्रादीनां दृष्टानाम्-अदृष्टस्य च स्वर्गादेर्व्यावृत्तिः। तथा च परिशेषानुमानान्मंगले समाप्तिजनकत्वसिद्धिरिति निष्कर्षः। इदमुपलक्षणम्— मंगलस्य समाप्तिजनकत्वे शिष्टाचारानुमितश्रुतिरपि प्रमाणम्। तादृशश्रुतेः सर्वज्ञभाष्यकारप्रभृतिभिः उच्चरितानुपूर्वीविशेषनिर्णयादेव बोध-कतासंभवात्, अत एव "न च तस्य निष्फलत्वे" इत्यग्रिममुक्तावलीग्रन्थोऽपि संगच्छते।

अत्रेदं बोध्यम्—"तत्र च फलजिज्ञासाया"मित्यस्य सफलत्वानुमितिसह-कारीभूतपक्षताघटकतया नोपादानम्, मंगलं सफलमिति सिद्धेर्मंगलं समाप्तिफल-

कमित्याकारानुमितावप्रतिबन्धकतया सफलत्वविधेयकमंगलोद्देश्यकानुमितिकालेऽपि विनैव सिषाधयिषां समाप्तिफलकत्वविधेयकानुमित्युत्पत्तौ बाधकाभावात्। समानकालिकसिद्धेः समानाकारानुमितिं प्रति विरोधित्वात्। तर्हि किमर्थं तदुपादानमिति चेत्। मंगलं निष्फलमित्याशंकायाः, मंगलं सफलमित्यनुमानेन निरासेपि तावता मंगले प्रवृत्तिनिर्वाहो न संभवतीति प्रवृत्तिनिर्वाहकं किं फलविशेषसाधनं मंगलमित्येवंविधवादिजिज्ञासायाः समाप्तिफलानुमानोपयोगितयाऽनुपयुक्तत्वाभावादिति।

अथ समाप्तिश्चरमवर्णध्वंसरूपा-न तु चरमवर्णरूपा, तथा सति चरमवर्णस्य तृतीयक्षणे नाशेन ततो ग्रन्थः समाप्त इति व्यवहारानुपपत्तेः। वर्णे चरमत्वं च - स्वघटितग्रन्थघटकवर्णप्रागभावाऽसमानकालीनत्वम्। तथा च ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायिदेशवृत्तित्वनियमेन समाप्तिराकाशनिष्ठा- मंगलं ज्ञानरूपमात्मसमवेतम् इति समाप्तिमंगलयोरेकाधिकरणवृत्तित्वविरहात्कथं समाप्तिं प्रति मंगलं कारणम्, ययोः सामानाधिकरण्यं तयोरेव कार्यकारणभावात्, तथाहि-मंगलं कारणं कारणं हि कार्याधिकरणे नियतपूर्ववृत्ति, अत्र हि समाप्त्यधिकरणे आकाशे मंगलं ज्ञानात्मकं नैव वर्त्तते इति चेत्। सत्यम्। स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेन समाप्तिं प्रति समवायेन मंगलं कारणमिति विवक्षणात्। स्वपदं चरमवर्णध्वंसपरम्। तथा हि ग्रन्थकर्त्तरि पुरुषे स्वप्रतियोगिचरमवर्णानुकूलकृतिर्वर्त्तते। तत्र समवायेन मंगलं वर्त्तते इति चरमवर्णध्वंसरूपसमाप्तेः स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेनाधिकरणे आत्मनि मंगलं समवायेन वर्त्तते इति समाप्तिमंगलयोर्वैयधिकरण्याभावात्कारणकार्यभाव इति ध्येयम्।

एवमनुमानेन सफलत्वस्य समाप्तिफलकत्वस्य च सिद्धावपि स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेन समाप्त्यधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकमंगलत्वाश्रयत्वे सति समाप्तिं प्रति अनन्यथासिद्धं मंगलमित्याकारककारणताग्रहे निरुक्तसम्बन्धेन समाप्त्यधिकरणवृत्त्यभावप्रतियोगितावच्छेदकं मंगलमित्याकारकव्यतिरेकव्यभिचारज्ञानस्य तदभाववत्ताज्ञानस्य तद्वत्तानिश्चयविधया प्रतिबन्धकतया तन्निरासः

**इत्थं च यत्र मंगलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते। यत्र सत्यपि मंगले समाप्तिर्न दृश्यते, तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम्। प्रचुरस्यास्यैव बलवत्तरविघ्ननिवारणे कारणत्वं बोध्यम्। विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः।**

यह प्राचीन ने कहा। (प्राचीनमत में नास्तिक प्रदत्त व्यतिरेक व्यभिचार का वारण आस्तिक करता है, "इत्थञ्च" इत्यादि ग्रन्थ से कि इस प्रकार जहां (किरणावली आदि नास्तिक ग्रन्थों में) मंगल नहीं देखते हैं वहां पर हम जन्मान्तरीय मंगल का अनुमान करते हैं कि नास्तिक पूर्वजन्म में पूर्ण आस्तिक था जिसके नाते इसने बहुत ही ईश्वरनमस्कारात्मक

मंगल किया था, मृत्युकाल में किसी कर्मवैगुण्य के नाते वह नास्तिक होगया—परन्तु जन्मान्तरीय आस्तिकताप्रयुक्त किये हुवे मंगल का फल ( समाप्ति ) उसे अवश्य प्राप्त होगया। अन्वयव्यभिचार का वारण करते हैं "यत्र च सत्यपि" इससे, जहां (कादम्बरी में) मंगल के होने पर भी समाप्ति नहीं देखते हैं वहां या तो बलवान् विघ्न है या विघ्न अधिक हैं, अतः समाप्ति नहीं होसकी। अतः प्रचुर ( अधिक संख्या वाला ) यह मंगल ही बलवत्तर विघ्न के निवारण में कारण हो सकता है। विघ्नध्वंस मंगल का द्वार ( व्यापार ) है। ऐसा प्राचीन कहते हैं। अर्थात् मंगल से जो समाप्ति होती है वह विघ्नध्वंसद्वारा। ( इससे यह सिद्ध हुआ कि प्राचीनमत में मंगल का फल समाप्ती है )।

कथं संभवतीत्याशंक्याह इत्थं चेति। मंगलस्य समाप्तिसाधनत्वसिद्धौ चेत्यर्थः। यत्र नास्तिकग्रन्थे। समाप्तिरूपकार्यदर्शनेन मंगलकारणस्याऽनुमातुं शक्यतया निरुक्त-संबन्धेन समाप्त्यधिकरणे नास्तिकात्मनि मंगलस्यैव सत्त्वेन समाप्त्यधिकरणवृत्त्य-भावप्रतियोगितावच्छेदकं मंगलत्वमिति व्यभिचारज्ञानाऽसम्भव इति भावः। नन्वत्र जन्मान्तरीयमंगलकल्पनमयुक्तं, समाप्तिरूपकार्येण मंगलमात्रस्यैवानुमातुं शक्यत्वात्, न तु जन्मान्तरीयस्येति चेन्न। समाप्त्या मंगलमेवानुमीयते, अनुमितिश्च नास्तिकः मंगलवान् समाप्तिमत्त्वादित्याकारिका, तत्रैहिकबाधे जन्मान्तरीयं तदर्थात्कल्प्यते इति ध्येयम्। न चैहिकफलार्थस्य कर्मणोऽनुष्ठाने फलादर्शनेन वैगुण्यकल्पनमेव युक्तं, न तु जन्मान्तरीयफलकल्पनमिति वाच्यम्। वृष्टिकामनया कारीरीष्टयादौ तथा कल्पनेऽपि पुत्रकामनया पुत्रेष्टयादौ जन्मान्तरीयपुत्रस्यापि फलत्वस्य न्यायसिद्धतया प्रकृतेऽपि जन्मान्तरीयसमाप्तेः फलत्वसंभवात्। नचाद्यैव वृष्टिर्भूयादिति कामनया कारीर्यनुष्ठानवत्, प्रारीप्सितं कर्म समाप्यतामिति कामनया मंगलानुष्ठानदर्शनादत्र फलादर्शने ऽमुत्रफलकल्पनापेक्षया वैगुण्यकल्पनमेव युक्तमिति वाच्यम्। इष्टेर्बह्वङ्गकलापयुक्ततया विशिष्टकर्त्तृकतया च तत्तदङ्गकर्त्तृवैगुण्यसंभवेपि नमस्कारमात्रादिरूपमंगलस्य वर्णाश्रमविशेषानादरेण पुरुषमात्रस्यैव तत्र कर्त्तृतया कर्त्तृवैगुण्यासंभवात्, ईश्वरादिविशेष्यकस्वापेक्षोत्कर्षप्रकारकज्ञानादिरूपतया तत्राङ्गकलापाभावाच्च वैगुण्यकल्पनाऽसंभवेन फलकल्पनस्यैव युक्तत्वात्।

ननु कार्यात् कारणस्यानुमेयतया नास्तिकग्रन्थे समाप्तिरूपकार्यदर्शनेन तत्कारणेऽनुमातव्ये जन्मान्तरानुष्ठितसुवर्णदानादिजन्यविघ्नध्वंसस्य विघ्नात्यन्ता-भावस्य वा कारणस्यानुमानेन जन्मान्तरीयमंगलकल्पनमयुक्तमेवेति चेत्। सत्यम्। तस्य दृष्टकामनानुरोधेन जन्मान्तरे सत्त्वेन समाप्तिं प्रति कारणीभूतविघ्नध्वंसाभा-वप्रदर्शनेन स्वेतरप्रतिबन्धकाभावरूपविघ्नध्वंसात्मककारणसमवहितस्य स्वाव्यवहि-तोत्तरक्षणावच्छेदेन समाप्त्यभावकमंगलस्यैवाऽन्वयव्यभिचाररूपतया मंगलाधिक-रणे "जन्मान्तरे" विघ्नध्वंसाभावेन विघ्नध्वंससहितस्वाधिकरणवृत्तिसमाप्त्यभाव-त्वरूपान्वयव्यभिचारो नास्तीति प्रदर्शितमिति कुतोऽन्यथासिद्धिरिति भावः।

न च सिद्धे जन्मान्तरीये मंगले व्यभिचाराभावज्ञानेन कार्यकारणभावग्रहः,

गृहीते च कार्यकारणभावे समाप्त्या तदनुमानमित्यन्योन्याश्रय इति वाच्यम्। समाप्तिकार्यत्वेन परिशेषात् मंगलानुमाने बाधकाभावादिति।

ननूक्तरीत्या कारणताघटकसमाप्त्यधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं मंगलमित्याकारकव्यापकताज्ञानविरोधिज्ञानविषयीभूतसमाप्त्यधिकरणवृत्त्यभावप्रति-योगितावच्छेदकमंगलत्वरूपव्यतिरेकव्यभिचारस्य निरासेऽपि समाप्तिं प्रति अवश्य-क्लृप्तनियतपूर्ववृत्तिभिन्नत्वरूपाऽन्यथासिद्धत्वज्ञानप्रयोजकस्याव्यवहितोत्तरक्षणावच्छि-न्नस्वाधिकरणवृत्तिसमाप्त्यभावकमंगलरूपाऽन्वयव्यभिचारो दुष्परिहर इत्यत आह **यत्र चेति**। कादम्बर्यादौ चेत्यर्थः। सत्यपि मंगले समाप्तिर्न दृश्यते इत्यनेन स्वाव्यव-हितोत्तरक्षणावच्छेदेन स्वाधिकरणवृत्तिसमाप्त्यभावत्वरूपान्वयव्यभिचारप्रदर्शनेन समाप्तिं प्रति अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वरूपान्यथासिद्धिरुद्घाटिता। **बलवत्तर** इति। बलवत्तरत्वं च विघ्नत्वव्याप्यजातिविशेषः। तदाश्रयप्रतियोगिकना-शत्वं जन्यतावच्छेदकं बलवत्तरत्वरूपवैजात्यकल्पने गौरवादाह **विघ्नप्राचुर्यं वेति**। प्राचुर्यमनेकत्वम्। **तत्र च बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा** बोध्यमित्यनेन समाप्तिप्रतिबन्धकस्यैव तत्र सत्त्वेन समाप्तिकारणीभूतविघ्नध्वंसाभावप्रदर्शनेन स्वेतरप्र-तिबन्धकाभावरूपविघ्नध्वंसात्मककारणसमवहितस्य स्वाव्यवहितोत्तरक्षणावच्छेदेन स-माप्त्यभावकमंगलस्यैवान्वयव्यभिचाररूपतया मंगलाधिकरणे विघ्नध्वंसाभावेन विघ्न-ध्वंससहितस्वाधिकरणवृत्तिसमाप्त्यभाववत्त्वरूपान्वयव्यभिचारो नास्तीति प्रदर्शित-मिति कुतोऽन्यथासिद्धिरिति भावः। ननु नाशकसत्त्वेन नाशापत्तिरत आह **प्रचुरस्यैवेति**। विघ्नाऽन्यूनसंख्याकमंगलत्वेनैवेत्यर्थः। **अस्य** मंगलस्य। **बलवत्त-रविघ्ननिवारणे** बलवत्तरादिविघ्ननिवारणे। आदिना प्रचुरविघ्ननिवारणपरिग्रहः। तथा च प्रचुरविघ्ननाशं प्रति विघ्नान्यूनसंख्याकमंगलत्वेनैव कारणतया प्रचुरमंगला-भावात्प्रकृते न विघ्ननाश इति भावः। इदमुपलक्षणम्। पूर्वोत्पन्नविघ्नानां तेन नाशेऽपि तदुत्तरविघ्नानां नाशकाभावेन न समाप्तिरित्यपि बोध्यम्।

अत्रेदं बोध्यम्। यत्र मंगलसत्त्वेऽपि समाप्तिर्न दृश्यते तत्र विघ्नध्वंसो नोत्पन्न इति न बुद्धिप्रतिभादिरूपकारणान्तराभावात् मंगलानन्तरोत्पन्नविघ्नाद् बलवत्तर-विघ्नाद्वा समाप्त्यभावः संभवति तस्मात्कुतोऽन्वयव्यभिचारः। न चैवं मंगलस्य मंगलजन्यविघ्नध्वंसस्य च सत्त्वेऽपि समाप्त्यनुत्पत्तौ सहकारीभूतविघ्नध्वंससहितस्वा-धिकरणवृत्तिसमाप्त्यभावकत्वरूपाऽन्वयव्यभिचार एव भवता दृढीकृत इति वाच्यम्। स्वस्वव्यापारीभूतविघ्नध्वंसेतरयावत्कारणसमवहितस्वाधिकरणवृत्तिसमाप्त्यभावकत्व-स्येहान्वयव्यभिचारपदार्थतया मंगलतद्व्यापारीभूतविघ्नध्वंसयोः सत्त्वेऽपि बुद्धि-प्रतिभादिकारणान्तराभावेन मंगलाऽनाश्यप्रबलप्रतिबन्धकध्वंसाभावरूपकारणाभावेन च स्व-स्वव्यापारेतरयावत्कारणसमवहितस्वाधिकरणवृत्तिसमाप्त्यभावकत्वरूपान्वय-व्यभिचारो नास्तीति कुतोऽन्यथासिद्धिशंकेति। बलवत्तरो विघ्नो विघ्नप्राचुर्यं वेत्यत्र मंगलानन्तरोत्पन्न इति पूरणीयम्।

करणानां तत्तदिन्द्रियाग्राह्यत्वात् प्रत्यक्षत्वं न स्यात्। एतेन ज्ञानविशेष-कालविशेषात्मकत्वमभावस्येति प्रत्युक्तमप्रत्यक्षत्वापत्तेः ॥१२॥

सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥१३॥

काल रूप हैं। एतेन (इस वक्ष्यमाण अप्रत्यक्षापत्तिरूप दोष से) अभाव के ज्ञानरूपता तथा कालरूपता का पक्ष भी प्रत्युक्त (खण्डित) हो गया। क्योंकि काल सर्वथा प्रत्यक्षायोग्य है अतः अभाव को यदि काल स्वरूप मानेंगे तो अभाव का प्रत्यक्ष नहीं होगा। ऐसे ही ज्ञान का भी वहिरिन्द्रिय से प्रत्यक्ष नहीं होता अतः अभाव को यदि ज्ञानस्वरूप मानेंगे तो भी अभाव का प्रत्यक्ष नहीं हो सकेगा। अतः अप्रत्यक्षत्वापत्तिरूप दोष के कारण अभाव को-ज्ञान-या कालरूप नहीं मान सकते हैं। वही मूल में कहा है कि "एतेन ज्ञानविशेष-कालविशेषाद्यात्मकत्वमभाव-स्येति प्रत्युक्तमप्रत्यक्षत्वापत्तेः" ॥ १२ ॥

---

पटाभावे घटो नास्तीति प्रतीत्याऽभेदेपि आधाराधेयभावनिर्वाहेपि प्रकृते तु अतिरिक्त-कल्पनैव लघीयसीति मन्तव्यम्। अभेदेपि आधाराधेयभाव उपपद्यते इति तुष्यतु दुर्जनन्यायेनाह **एवंचेति**। केचित्तु ननु एकस्यापि रूपान्तरेणाधाराधेयभावोपि कल्प्यते अनुभवबलात्, तत्तदधिकरणमात्रवृत्तिधर्मात्मकत्वं वाऽभावानां कल्पनीय-मत आह **एवंचेतीत्याहुः**। तच्चिन्त्यम्। भूतलं अभाव इति प्रतीत्योर्वैल-क्षण्यानुपपत्तेः। **तत्तच्छब्देति**। शब्दाभाव-गन्धाभाव-रसाभावानामित्यर्थः। **अन्यथा** अभावानामधिकरणात्मकत्वे। **तत्तदधिकरणानां** = आकाशवाय्वादीनाम्। **चक्षुरादिन्द्रियाऽग्राह्यत्वादिति**। श्रोत्रेन्द्रियस्याकाशाऽग्राहकत्वात्, रसनाया घ्राणस्य चाऽश्रयाग्राहकत्वादित्यर्थः। तथाच तत्तच्छब्दगन्धरसाद्यभावानां अप्रत्यक्षत्वापत्तेरिति। इदमप्रयोजकम्—गगनादीनां गगनत्वादिना तत्तदिन्द्रियाऽयोग्यत्वेपि शब्दाद्यभाव-त्वेन योग्यत्वे बाधकाभावः। गुरुत्वादेर्गुरुत्वत्वादिनाऽयोग्यत्वेपि प्रमेयत्वेन योग्यत्व-वत्। न चाऽयोग्यस्य रूपान्तरेण योग्यत्वेपि विशेष्यांशे लौकिकविषयत्वाऽसंभवः। रूपाभावांशे चाक्षुषविषयतानंगीकारे वायौ रूपाभावं पश्यामीति प्रत्ययानुपपत्ति-प्रसंगात्। तदंगीकारे वायौ लौकिकविषयतासंबन्धेन चाक्षुषोत्पत्त्या समवायेन रूपहे-तुतायां व्यभिचारप्रसंगादिति वाच्यम्। शब्दं न शृणोमीति प्रतीत्या शब्दाभावत्ववि-शिष्टेप्यनेन रूपेण लौकिकविषयतासत्त्वे बाधकाभावादिति। तस्मादनन्तानामित्या-दिनाऽभिहिताया युक्तेरेव साधीयस्त्वमिति ध्येयम्।

वस्तुतस्तु द्रव्यसमवेतनाशे द्रव्यनाशस्य हेतुतया, घटसमवेतनाशे घटनाशस्य हेतुता वाच्या। घटनाशस्याऽऽरंभकसंयोगनाशजन्यस्य कपालात्मकतया कपालनाश-जन्यघटनाशस्य भूतलात्मकतया त्वन्नये नानापदार्थात्मनो घटनाशस्य हेतुत्वमिति कल्पनागौरवम्, अतिरिक्ततामते तु कारणत्वघटकीभूतपदार्थकल्पनाया एकनिष्ठत्वात्।

**इदानीं पदार्थानां साधर्म्यवैधर्म्ये वक्तुमुपक्रमते सप्तानामिति। समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यं, समानो धर्म इति फलितार्थः। एवं विरुद्धो धर्मो येषां ते विधर्माणः तेषां भावो वैधर्म्यं, विरुद्धो धर्म इति फलितार्थः। ज्ञेयत्वं ज्ञानविषयता सा च सर्वत्रैवास्ति, ईश्वरादिज्ञानविषयतायाः केवलान्वयित्वात्। एवमभिधेयत्वप्रमेयत्वादिकं बोध्यम् ॥१३॥**

अब पदार्थों के साधर्म्य तथा वैधर्म्य बतलाते हैं।

द्रव्यादि सात पदार्थों का साधर्म्य है "ज्ञेयत्व"। आदि पद से अभिधेयत्व प्रमेयत्व भी जानना। समानधर्म को साधर्म्य कहते हैं, तथा विरुद्ध धर्म को वैधर्म्य कहते हैं। जानने योग्य जो हो उसे ज्ञेय कहते हैं। ज्ञेयता ज्ञानविषयता वह सर्वत्र रहती है— क्योंकि ईश्वरज्ञानविषयता केवलान्वयी है। ऐसे ही अभिधेयत्व-आदि भी सात पदार्थों के साधर्म्य हैं। १३।

---

एवं वृत्तादुरितक्षयाय गंगास्नानं करोमीति प्रतीत्या गंगास्नानस्य दुरितक्षयहेतुत्वमानुभविकं श्रौतं च। न हीदं हेतुत्वं दुरितक्षयस्याधिकरणरूपत्वे संभवितुमर्हतीत्यतोऽतिरिक्ताभावपक्ष एव श्रेयानिति। **एतेन**=उक्तदूषणेन।

**ज्ञानविशेषेति**। अत एव एतन्मते ज्ञानस्य स्वप्रकाशत्वं, स्वात्मकज्ञानविषयस्य स्वस्वरूपत्वात्। तदेकदेशिमतान्तरमाह **कालविशेषात्मकत्वमिति**। केवलाधिकरणज्ञानस्य=केवलाधिकरणकालस्य वा तदधिकरणवृत्त्यभावत्वं कल्प्यते लाघवात्। तत्तत्पुरुषभेदेन तत्तत्कालभेदेन च घटाभावादेर्नानात्वं तु फलमुखमतो न दोष इति प्राभाकरमतान्तरम्। **अप्रत्यक्षतापत्तेरिति**। चक्षुरादिबाह्येन्द्रियायोग्यतया प्रथमपक्षे बाह्येन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वानापत्तेः। द्वितीयपक्षे तु इन्द्रियमात्रजन्यलौकिकप्रत्यक्षविषयत्वानापत्तेरित्यर्थः। यद्यप्येतेनेति ग्रन्थेनाऽप्रत्यक्षतापत्तेरिति लभ्यते एव, तथापि क्षतच्छद्दाभावादीनामप्रत्यक्षतापत्तेरित्यस्यैव लाभाद् घटाभावादीनां ज्ञानविशेष-कालविशेषांगीकारत्वपक्षे दूषणं न प्रसज्यते इत्यतोऽभिहितमप्रत्यक्षतापत्तेरिति।

इदमुपलक्षणम्—अभावस्य "घटो नास्तीति" ज्ञानरूपत्वे तादृशज्ञानविरहदशायां घटात्यन्ताभावो घटध्वंसो वा ध्वस्त इति प्रत्ययापत्तिः। स्याच्च मणिसमवधानदशायां मणिर्नास्तीति ज्ञानकाले दाहोत्पादः। तादृशज्ञानव्यक्तौ नाभावत्वकल्पनेति चेन्, मा कल्प्यताम् तथापि प्रतियोगिशून्यतादृशायां मणिर्नास्तीति ज्ञानविरहे दाहोत्पादानापत्तेः। ज्ञानस्य कार्येऽधिकरणतया हेतुत्वासंभवाच्च। कालविशेषात्मकत्वपक्षेपि किं खण्डकालात्मकत्वं-महाकालात्मकत्वं वा! आद्ये आनन्त्यम्। द्वितीये तु आकाशात्मकत्वमीश्वरात्मकत्वं जीवात्मकत्वं वेत्यत्र विनिगमनाविरह इति विभावनीयम्।

साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुरिति श्रवणात्, आपाततो निरूपितानां पदार्थानां धर्मतया साधर्म्यवैधर्म्ययोः स्मरणाच्च साधर्म्यवैधर्म्ये निर्वक्तुमाह

द्रव्यादयः पञ्च भावा अनेके समवायिनः।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः॥ १४॥

द्रव्यादय इति। द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं

द्रव्य–गुण–कर्म–सामान्य–विशेष–इन पाँच का साधर्म्य–भावत्व–अनेकत्व–समवायित्व हैं। यद्यपि भावत्व की समवाय में अतिव्याप्ति ही है—और अनेकत्व की अभाव में अतिव्याप्ति है। तथापि "अनेकत्वे सति भावत्वं" यह विशेष्य-विशेषणभावापन्न साधर्म्य कर देना। प्रश्न—"अनेकत्वे सति भावत्व" इस साधर्म्य की प्रत्येक घट में–आदिपद से काल–को भी ले लेना—इनमें अव्याप्ति हो जावेगी—क्योंकि प्रत्येक घट-तथा आकाशादि में भावत्व है, परन्तु अनेकत्व नहीं—अतः अनेकत्वे सति भावत्व नहीं रहा। अतः अनेकत्वे सति भावत्व का अर्थ करते हैं अनेक भाववृत्तिपदार्थविभाजकोपाधिमत्व—अनेक भाव हुए द्रव्य–गुण–कर्म–सामान्य–विशेष–इनमें रहनेवाली पदार्थ विभाजक उपाधि–द्रव्यत्व–गुणत्व–कर्मत्व–सामान्यत्व–विशेषत्व–तद्वत्ता निखिलद्रव्य में–निखिलगुण में–निखिलकर्म में–निखिल सामान्य में–निखिल विशेष में है—अतः द्रव्यत्वरूप जो उपाधि तद्वत्ता निखिल द्रव्य में है तो प्रत्येक घट में तथा

---

इदानीमिति। "सप्तानामि"त्यादिना "पंच वेगश्च मानसे" इत्यन्तेन। मूले-सप्तानामपीत्यत्राऽपिर्ज्ञेयत्वस्येतरभेदानुमानानुपयोगितया साधर्म्यमनुपयुक्तमिति कथयति। ननु किमर्थमुच्यते तत्राह उच्यते इति। सप्तपदार्थेषु ज्ञेयमिति व्यवहारोपाधितयाऽभिधीयते इत्यर्थः। सप्तानां पदार्थानां ज्ञेयत्वं न साधर्म्यम्, साधर्म्यं हि समानधर्मभावः, स च ज्ञेयत्वादिवृत्तिधर्मे इत्यनुपपन्नमित्यपरितोषादाह समानो धर्म इति। भावार्थोऽविवक्षित इत्यभिप्रायः। एवं जलादीनां गन्धो वैधर्म्यमित्यत्रापि भावार्थो न विवक्षित इत्याह एवमिति। ईश्वरादीति। आदिना योगिपरिग्रहः। केवलान्वयित्वादिति। अत्यन्ताभावाप्रतियोगित्वादित्यर्थः। ज्ञेयत्वादिकमिति मूलोपात्तादिशब्दार्थमाह एवमिति। अभिधेयत्वं=शब्दशक्यत्वम्। प्रमेयत्वं=प्रमाविषयत्वम्। आदिना संयोगाभावादिः। यद्यपि विषयतामात्रमेव साधर्म्यं वक्तुमुचितं ज्ञानीयत्वनिवेशनमफलम्, तथापि अतिरिक्तविषयतानंगीकर्तृमते निरूपितत्वसंबन्धेन ज्ञानविशिष्टस्यैव लक्षणत्वम्, तच्चाऽतिरिक्तविषयतांगीकर्तृमतेपि न विरुद्धमिति बोधनाय तत्। तच्च ज्ञानीयं किमित्याकांक्षायां विषयत्वोपादानम्। वस्तुतो विषयतासंबन्धेन ज्ञानविशिष्टत्वमेव लक्षणम्।

द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां भावत्वं साधर्म्यम्। भावत्वं च समवाय-एकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वम्। एकार्थसमवायश्च स्वप्रतियोगिकसमवायप्रतियोगित्व-स्वप्रतियोगिकसमवायतादात्म्यान्यतररूपः। स्वद्वयं सत्तापरम्। सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं साधर्म्यं स्फुटमिति षण्णां साधर्म्यमुपेक्ष्य

समवायित्वं च। यद्यप्यनेकत्वमभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम्। तथा चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोऽर्थः। तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः। समवायित्वं च समवायसंबन्धेन संबन्धित्वं, न तु समवायवत्त्वं, सामान्यादावभावात्। (तथा च समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोर्थः। तेन

आकाशादि में भी है अतः उनमें अव्याप्ति नहीं हुई। समवायित्व भी प्रागुक्त पाँच पदार्थों का साधर्म्य है—समवायित्व के दो अर्थ हैं—"समवायसम्बन्धेन सम्बन्धित्व" अर्थात् (समवायसम्बन्ध से स्वयं रहना)। दूसरा "समवायवत्व" अर्थात् (समवायसम्बन्ध से किसी वस्तु को अपने में रखना)। इन दोनों में प्रथम अर्थ ही उचित है—द्वितीय अर्थ (समवायवत्त्व में सामान्य आदि में अव्याप्ति हो जावेगी—आदिपद से विशेष को भी ले लेना—अर्थात् समवायवत्त्व यदि समवायित्व का अर्थ करेंगे तो सामान्य तथा विशेष में अव्याप्ति हो जावेगी – क्योंकि वे समवायवान् नहीं हैं—अर्थात् उनमें समवाय सम्बन्ध से कोई नहीं रहता है। वही मूल में कहा है कि "नतु समवायवत्त्वं सामान्यादावभावात्"। प्रश्न—प्रथम अर्थ में भी तो नित्यद्रव्य जो परमाणु एवं आकाश आदि हैं उनमें अव्याप्ति हो जावेगी—वे समवायसम्बन्ध से कहीं नहीं रहते हैं। उत्तर—समवायित्व का "समवायसम्बन्धेन सम्बन्धित्व" यह अर्थ न करके "समवेतवृत्तिपदार्थ विभाजकोपाधिमत्त्व" यह अर्थ कर देना। समवेत हुवे द्रव्य-गुण-कर्म-सामान्य-विशेष-उनमें वृत्ति पदार्थ विभाजक उपाधि द्रव्यत्व-गुणत्व-कर्मत्व-सामान्यत्व-विशेषत्व-तद्वत्ता इन्हीं पाँचों में जावेगा, अतः समवायित्व का यह अर्थ पाँचों में समन्वित हो गया। और द्रव्यत्वरूप उपाधिमत्त्व निखिल द्रव्यों में है तो परमाणु-आकाश आदि नित्यद्रव्यों में भी है—अतः उनमें अव्याप्ति अब नहीं हुवी – क्योंकि एतादृश समवायित्व परमाण्वादि नित्यद्रव्यों में है। वही मूल में कहा है कि "तेन नित्यद्रव्येषु नाव्याप्तिः"।

---

पंचानामाह मूले द्रव्यादय इति। द्रव्यमादिर्येषामिति तद्गुणसंविज्ञानो बहुव्रीहिः। पंचत्वकथनं तु तेन लक्ष्यतासूचनाय। तच्च द्रव्यगुणकर्मसामान्यविशेषान्यतमत्वम्। एतेन द्रव्यादीनामित्युक्तौ समवायोपि गृह्येत पंचानामित्युक्तौ केषामिति न ज्ञायेत तदर्थमुभयोपादानमिति व्याख्यातम्। मूले-भावा इति उद्देश्यकोटौ निविष्टमित्यभिप्रायेणाशंकते यद्यपीत्यादिना। एतेन यद्यपि भावत्वं समवायेऽप्यस्तीत्येव प्रथमं वक्तव्यं न तु अनेकत्वमभावेऽप्यस्तीत्युक्तिर्युक्तेति निरस्तम्। द्रव्यादयः पंच भावा इत्यत्र भावत्वं नोद्देश्यतावच्छेदकं किन्तु भावा अनेके इति विधेयपरमित्याशयेन समाधत्ते तथापीत्यादिना। तथाच सामानाधिकरण्येनाऽनेकत्वविशिष्टभावत्वं फलितोर्थः। विशिष्टस्यानतिरिक्तत्वेपि विशिष्टाधिकरणत्वमेव तथेति न दोषः। समवायवारणाय विशिष्टान्तम्। यद्यपि अनेकत्वं न संख्या गुणादावभावात्। नापि

**नित्यद्रव्येषु नाव्याप्तिः)। सत्तावन्त इति। द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः। गुणादिरिति। यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वं च गगनादावतिव्याप्तम् तथापि गुणवदवृत्तिधर्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः। नहि घटत्वादिकं द्रव्यत्वं वा गुणवदवृत्ति कर्मवदवृत्ति वा, किं तु गुणत्वादिकम्, आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः ॥ १४ ॥**

**सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ॥**
**पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥१५॥**

"सत्तावन्त-त्रयस्त्वाद्याः"

आद्य तीन ( द्रव्य-गुण-कर्म ) का सत्तावत्त्व साधर्म्य है। ( क्योंकि ये तीन ही सत्तावान् हैं )। गुणादि ( गुण से लेकर अभावपर्यन्त ) का निर्गुणत्व ( गुणरहितत्व ) निष्क्रियत्व ( क्रियाशून्यत्व ) साधर्म्य है। प्रश्न—निर्गुणत्व तथा निष्क्रियत्व इन दोनों साधर्म्यों की आद्यक्षणावच्छिन्न ( उत्पत्तिक्षणावछिन्न ) घटादि में अतिव्याप्ति है ( क्योंकि "उत्पन्नं द्रव्यं क्षणमगुणं क्षणं निष्क्रियञ्च तिष्ठति इस नियम से आद्यक्षणावच्छिन्न घट में निर्गुणत्व तथा निष्क्रियत्व सिद्ध हो रहा है )। तथा निष्क्रियत्व साधर्म्य की गगन आदि में अतिव्याप्ति है ( आदि पद से काल-दिशा को लेना क्योंकि वे भी निष्क्रिय हैं ) अतः निष्क्रियत्व साधर्म्य की "आकाश-काल दिशा "इन तीन में अतिव्याप्ति है )। उत्तर—निर्गुणत्व का "गुणवदवृत्ति धर्मवत्त्व" यह अर्थ है। एतादृश निर्गुणत्व गुण से लेकर अभाव पर्यन्त ही में जावेगा द्रव्य में नहीं जावेगा—क्योंकि गुणवान् द्रव्य ही होगा – आद्यक्षणावच्छिन्न घट न हो, द्वितीय क्षणावच्छिन्न घट होगा · उसमें घटत्व-द्रव्यत्व तो वृत्ति ही हैं—अवृत्ति धर्म गुणत्व-कर्मत्व-सामान्यत्वविशेषत्व-समवायत्व-अभावत्व-ये छ ही हैं तद्वत्त्व इन्हीं छः में जावेगा अतः गुण से लेकर अभाव पर्यन्त का अर्थात् गुण-कर्म-सामान्य-विशेष-समवाय-अभाव-इन छः का निर्गुणत्वसाधर्म्य संपन्न हो गया।

ऐसे ही निष्क्रियत्व का भी क्रियाशून्यत्व यह अर्थ न करके "कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्व" यही अर्थ करना। ( यह अर्थ करने से गगन आदि में अतिव्याप्ति नहीं हुई—तथाहि कर्मवान् हुवा द्रव्य उसमें अवृत्ति पदार्थविभाजक उपाधि गुणत्व-कर्मत्व-सामान्यत्व-विशेषत्वसमवायत्व-अभावत्व, तादृशोपाधिमत्त्व-रूपनिष्क्रियत्व-गुण-कर्म-सामान्य-विशेष समवाय-अभाव इन छः पदार्थों ही में जावेगा-गगनादि में नहीं-क्योंकि गगनत्वादि यद्यपि कर्मवान् में अवृत्ति धर्म अवश्य हैं—परन्तु पदार्थ विभाजक उपाधि नहीं हैं-अपितु द्रव्य का विभाजक उपाधि है—अतः गगनादि में अतिव्याप्ति नहीं है।

सामान्यपरिहीनास्त्विति।

सब जाति आदि का अर्थात् सामान्य-विशेष-समवाय-अभाव इन चार का सामान्यपरिहीनत्व ( सामान्यशून्यत्व ) अर्थात् सामान्यानधिकरणत्व साधर्म्य है। एवं परिमाण्डल्य से भिन्न

सामान्यतोऽपेक्षाबुद्धिविशेषविषयत्वम्, समवायेतिव्याप्तितादवस्थ्यात्। समवायव्यावृत्तबुद्धिग्रहणे तु अभावव्यावृत्तबुद्धिग्रहणस्याप्यौचित्येन भावत्वोपादानवैयर्थ्यात्। तथापि द्रव्याणि गुणाः कर्माणि सामान्यं विशेषा इति बुद्धिविषयत्वं तद्ग्राह्यमित्यदोषः। वक्ष्यमाणदोषादाह **तथाचेति**। समवायत्ववारणाय **अनेकभाववृत्तीति**। ननु भावेऽनेकत्वं नैकभिन्नत्वम्, एकत्वस्य केवलान्वयितया एकभिन्नत्वस्याप्रसिद्धेरिति चेत्। स्वप्रतियोगिभाववृत्तित्व-स्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टत्वमनेकभाववृत्तित्वमिति नाऽप्रसिद्धिः। समवायाभावयोरपि अनेकभाववृत्तिद्रव्यादिपंचसमवायान्यतरत्व-उक्तपंचाऽभावान्यतरत्वशालितया चाऽनततस्तथाविधप्रमेयत्वादिमत्तया चातिप्रसंग इति **पदार्थविभाजकेति** यद्यपि भावत्वमपि पदार्थविभाजकोपाधिः, पदार्थो द्विविधो भावोऽभावश्चेत्येवमपि निरूपणात्। तथापि प्रकृते तथाऽनिरूपणात्। भावत्वान्यत्वेन विशेषणीयत्वादित्यपि केचित्। **प्रत्येकमिति**। एतच्चापाततः, अनेकत्वस्य पर्याप्तिविवक्षायां बीजाभावात्। समवायित्वं यदि समवायिकारणत्वं तदा गुणादावव्याप्तिरित्यत आह **समवायित्वं चेति**। **समवायसम्बन्धेनेति** षष्ठ्यर्थे तृतीया। समवायसंबन्धस्येति यावत्। **संबन्धित्व-मिति**। प्रतियोगिताऽनुयोगितान्यतरसंबन्धेन समवायवत्त्वमिति फलितम्। **अत्रेदं बोध्यम्**-प्रतियोगितासंबन्धेन समवायवत्त्वविवक्षणे नित्यद्रव्येऽव्याप्तिः-समवायेऽतिव्याप्तिश्च, समवायस्य समवायात्मकस्वरूपेणैव वर्तमानत्वात्। नाप्यनुयोगितासंबन्धेन समवायवत्त्वं तत्, सामान्यादावव्याप्तेः, तयोः समवेतधर्माभावात्। इत्थं च समवायान्यप्रतियोगिता-अनुयोगितान्यतरसंबन्धेन समवायवत्त्वं पंचानां साधर्म्यं फलितम्। **न तु समवायवत्त्वं**=समवायाधारत्वम्। **सामान्यादाविति** आदिना विशेषपरिग्रहः। **अभावादिति**। अनुयोगिन्येव संबन्धसत्त्वादिति भावः।

समवायित्वमात्रं न साधर्म्यम्, येनोक्तरीत्या समवायेऽतिप्रसंगः स्यात्, किन्तु अनेकत्वविशिष्टसमवायित्वम्। न चोद्देश्यतावच्छेदककोटौ भावत्वनिवेशे प्रयोजनाभावः, तस्य विधेयत्वे च समवायेऽतिप्रसंग इति वाच्यम्। तथासति अनेकपदं काकाक्षिगोलकन्यायेनोभयत्रान्वयि अनेकत्वविशिष्टभावत्वम्, अनेकत्वविशिष्टसमवायित्वमिति युक्तमुत्पश्यामः। प्रकाशकृन्मतमाह **तथाचेति**। अत्र समवेतत्वं स्वातिरिक्तसमवायसंबन्धेन वृत्तित्वमतो न समवायेऽतिव्याप्तिः।

समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यगुणकर्मसामान्यानां चतुर्णां साधर्म्यम्। क्रमप्राप्तं त्रयाणां साधर्म्यमाह **सत्तावत्त्वमिति**। सत्तावत्त्वं च समवायेन बोध्यम्। एवं द्रव्यगुणान्यतरत्वं द्वयोः साधर्म्यम्। द्रव्यस्य तु क्षित्यादीनां नवानां क्षित्यादिना वक्ष्यते। गुणवदवृत्तिधर्मवत्त्वं च गुणवद्वृत्तित्वत्वावच्छिन्न-प्रतियोगिताकाभाववद्धर्मवत्त्वम्, तेन घटत्वादेर्यत्किंचिद्गुणवदवृत्तित्वेपि न क्षतिः। अत्र च येन संबन्धेन गुणवदवृत्तित्वं तेन संबन्धेन धर्मवत्ता बोध्या, नातः संयोगेन

सामान्येति। सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः। पारिमाण्डल्येति। पारिमाण्डल्यमणुपरिमाणं-कारणत्वं तद्भिन्नानां साधर्म्यमित्यर्थः।

पदार्थों का "कारणत्व" साधर्म्य है। प्रश्न—( पारिमाण्डल्य क्या वस्तु है )। उत्तर —अणुपरिमाणको पारिमाण्डल्य कहते हैं—

जैसे परमाणु का परिमाण-द्व्यणुक का परिमाण-मन का परिमाण-अणुपरिमाण कहा गया है सो वह किसी का कारण नहीं होता है अतः उससे भिन्न पदार्थों का कारणत्व साधर्म्य है)

---

गुणवदवृत्तिनो द्रव्यत्वादेः समवायेन द्रव्यवृत्तावप्यनिष्टसिद्धिः। न वा समवायेन गुणवदवृत्तिनो गुणत्वादेः कालिकेन द्रव्यवृत्तित्त्वेपि क्षतिः। अथवा स्वरूपेण गुणवदवृत्तित्वं धर्मवत्त्वं च वाच्यम्, सर्वत्र गुणत्वकर्मत्वसामान्यत्वविशेषत्वसमवायत्वाऽभावत्वप्रकारकप्रमाविशेष्यत्वादिकमादाव लक्षणसमन्वयः। न चाभावत्वस्य तत्प्रकारकप्रमाविशेष्यत्वस्य वा न गुणवदवृत्तित्वम्, घटाभावाभावात्मके गुणवति तस्य वृत्तित्वात्। गुणवन्मात्रावृत्तिधर्मवत्त्वोक्तौ तु गुणत्वप्रकारकप्रमाविशेष्यद्रव्यत्वप्रकारकप्रमाविशेष्यान्यतर शालिनि द्रव्येऽतिप्रसंगः, तादृशान्यतरत्वस्य गुणवन्मात्रावृत्तित्वादिति वाच्यम्। अभावत्वस्य गुणवद्वृत्तित्वेपि क्षतिविरहात्। सर्वत्राभावादौ घटत्वपटत्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वादिना लक्षणसमन्वयसंभवात्। गगनत्वादेर्गुणवदवृत्तिधर्मत्वाभावेन निर्गुणत्वनिरुक्तिघटकधर्मे पदार्थविभाजकोपाधित्वनिवेशे प्रयोजनविरहो मन्तव्यः। पदार्थविभाजकोपाधिपदस्य कृत्यमाह **आकाशत्वादिकमिति**। आदिना दिक्त्वादेः परिग्रहः। येन रूपेण विभागस्तद्रूपस्यैव विभाजकोपाधितयाऽऽकाशत्वस्य द्रव्यविभाजकोपाधित्वेपि पदार्थविभाजकोपाधित्वाभावादिति भावः। **सामान्यानधिकरणत्वमिति**। स्वप्रतियोग्यनधिकरणत्वस्वप्रतियोगिताविरोध्यनुयोगित्वोभयसंबन्धेन गुणाभाववत्त्वं कर्मादीनां साधर्म्यं संभवत्येवेत्यतः सामान्यमारभ्यैव साधर्म्यमभिहितम्। मूले **जात्यादय** इत्यत्राऽतद्गुणसंविज्ञानबहुव्रीहिभ्रमवारणाय सर्वशब्दप्रयोगः। जातावेकार्थसमवायेन सामान्यसत्त्वादुक्तं परीति। एतदर्थश्चाधिकरणत्वम्। अत एवोक्तं **सामान्यानधिकरणत्वमिति**। एकार्थसमवायश्च नाधिकरणतानियामकः, तेन संबन्धेन प्रतीत्यभावात्। समवायसंबन्धावच्छिन्नप्रतियोगिताकसामान्याभाववत्त्वं साधर्म्यमिति तु फलितोर्थः। तादृशाभाववत्वमपि स्वरूपेण, नातः संयोगसंबन्धावच्छिन्नप्रतियोगिताकसामान्याभावस्य समवायसंबन्धावच्छिन्नप्रतियोगिताकतदभावस्य स्वरूपसंबन्धेन कालिकेन च द्रव्यवृत्तित्वेपि क्षतिः। एवं समवेताऽसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं विशेषादीनां—असमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं समवायाभावयोः असमवेतजन्यवृत्तिपदार्थविभाजकोपाधिमत्त्वमभावस्य च साधर्म्यं द्रष्टव्यम्, तेन न न्यूनताप्रसक्तिः। उभयत्राऽसमवेतवृत्तित्वं च स्वरूपेणैवेति।

**अणुपरिमाणं तु न कस्यापि कारणम्। तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत्। तच्च न संभवति, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाण-**

प्रश्न—अणुपरिमाण कारण क्यों नहीं होता है ? उत्तर—अणुपरिमाण यदि कारण होगा तो स्वाश्रय से आरब्ध जो द्रव्य उसके परिमाण का आरंभक हो सकेगा—(अर्थात् स्वपद से परमाणु का अणुपरिमाण उसका आश्रय परमाणु-उससे आरब्ध ( उत्पन्न ) द्रव्य द्व्यणुक-उसके परिमाण का आरंभक (उत्पादक) अणुपरिमाण हो सकेगा ) परन्तु वह संभव नहीं। क्योंकि परिमाण का स्वभाव है कि वह अपने समान जातीय तथा उत्कृष्ट परिमाण का जनक होता है ( उत्कृष्टता तरप्-तमप् प्रत्यय प्रयुक्त होती है ) जैसे कपाल के महत्परिमाण से आरब्ध जो घट का परिमाण-वह महत्तर होता है—वैसे ही (परमाणु के) अणुपरिमाण से जन्य (द्व्यणुक का परिमाण) अणुतर हो जायगा। (और द्व्यणुक के अणुतर परिमाण से जन्य जो त्रसरेणु का परिमाण-वह अणुतम हो जायगा-तो त्रसरेणु का प्रत्यक्ष नहीं हो सकेगा-इसी प्रकार अगाड़ी घट का प्रत्यक्ष नहीं होगा।

---

**अणुपरिमाणमिति।** परमाणुपरिमाणं द्व्यणुकपरिमाणं चेत्यर्थः।

**तद्धि**=अणुपरिमाणं हि। **स्वाश्रयेति।** स्वं- परमाणुपरिमाणं-द्व्यणुकपरिमाणं च-तदाश्रयः परमाणुः-द्व्यणुकं च-तदारब्धं (तज्जन्यं) द्रव्यं द्व्यणुकं त्र्यणुकं च तत्परिमाणारंभकं तत्समवेतपरिमाणजनकम्। **भवेदिति।** तथाच परमाणुपरिमाणं द्व्यणुकपरिमाणजनकं भवेत्, द्व्यणुकपरिमाणं च त्र्यणुकपरिमाणजनकं भवेत् अवयवपरिमाणस्य अवयविपरिमाणजनकत्वादिति भावः। **तच्चेति।** आरंभकं-चेत्यर्थः, अणुपरिमाणमिति शेषः। **जनकत्वनियमादिति।** भवति च कपालपरिमाणं स्वसमानजातीयस्य स्वोत्कृष्टस्य घटपरिमाणस्य जनकम्। एवं यदि परमाणुपरिमाणं द्व्यणुकपरिमाणजनकं तदा स्वसमानजातीयोत्कृष्टमणुतरमेव **जन्येत,** एवं द्व्यणुकपरिमाणमपि यदि त्र्यणुकपरिमाणस्य जनकं तदा स्वसमानजातीयोत्कृष्टाऽणुतममेव जन्येत इति त्र्यणुकपरिमाणतदाश्रययोः प्रत्यक्षाविषयता भज्येत। तस्माद् द्व्यणुकपरिमाणत्र्यणुकपरिमाणयोः परमाणुद्व्यणुकसमवेतद्वित्वबहुत्वजन्यत्वमुपपादयिष्यते। कपालपरिमाणस्य परमाणुनिष्ठोत्कृष्टाणुतरपरिमाणजनकत्वेनार्थान्तरव्युदासाय **स्वसमानजातीयेति।** एवमपि स्ववृत्तिपरिमाणत्वजात्या परमाणुपरिमाणस्य कपालपरिमाणसजातीयत्वेपि परिमाणत्वव्याप्यजात्या तथात्वं विवक्षणीयम्। कपालपरिमाणजन्यघटपरिमाणस्य तत्समानपरिमाणजनकत्वेनाऽर्थान्तरं माभूदत **उत्कृष्टेति।** एवं च त्र्यणुकपरिमाणं न द्व्यणुकपरिमाणजन्यं प्रत्यक्षविषयत्वात्, महत्परिमाणत्वाद्वेति फलितम्। न च परिमाणत्वावच्छिन्नं प्रति परिमाणत्वेन हेतुहेतुमद्भावे व्यभिचारः, त्र्यणुकपरिमाणत्वस्य जन्यतावच्छेदकाक्रान्ततया स्वाश्रयसमवेतत्वप्रत्यासत्त्या परिमाणस्याऽहेतुत्वादिति वाच्यम्।

**जनकत्वनियमात्, महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात् । एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः । इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम् । ज्ञायमानं सामान्यं न प्रत्यासत्तिः । ज्ञाय-**

इसी प्रकार परममहत्परिमाण—अतीन्द्रियसामान्य और विशेष ये भी किसी के कारण नहीं होते हैं । (अर्थात् पारिमाण्डल्य की तरह इनका भी अकारणत्व साधर्म्य है) प्रश्न—(योगी लोगों को अपने योगबल के द्वारा परमाणु का तथा आकाश-काल आदि का प्रत्यक्ष जब कि होता है तो परमाणु के अणुपरिमाण का तथा आकाश आदि के परममहत् परिमाण का भी प्रत्यक्ष अवश्य ही होगा—तो विषय के प्रत्यक्ष के प्रति विषय कारण होता है अतः अणु परिमाणविषयकप्रत्यक्ष एवं परममहत् परिमाण विषयक प्रत्यक्ष के प्रति तादृश प्रत्यक्ष का विषय जो अणुपरिमाण—एवं परममहत्परिमाण उसको कारणता बन गयी— तब कैसे कहा कि ये किसी के भी कारण नहीं होते हैं—अर्थात् पारिमाण्डल्य एवं परममहत्परिमाण किसी के कारण नहीं होते हैं ) उत्तर—(हमने जो यह कहा कि परिमाण्डल्य किसी का कारण नहीं होता है) सो यह भी "योगियों के प्रत्यक्ष में विषय कारण नहीं हैं—इस अभिप्राय से । (क्योंकि योगियों को अपने योगबल के द्वारा भूत-भविष्यत्- वर्तमान-त्रिकालस्थ वस्तु का प्रत्यक्ष होता रहता है— सो भूतकालीन एवं भविष्यत्कालीन वस्तु विषयक प्रत्यक्ष के प्रति भूतकालीनवस्तुरूप विषय को एवं भविष्यत्कालीन वस्तु रूप विषय को कारण कहेंगे—वह कारण नहीं हो सकेगा-क्योंकि भूतकालीन वस्तुरूप विषय तो है भी नहीं वह तो नष्ट हो चुका—एवं भविष्यत्कालीनवस्तु रूप विषय अभी तक उत्पन्न भी नहीं हुवा—उसे भी कारणता नहीं बन सकती है—इसी प्रकार पारिमाडल्य के प्रत्यक्ष में योगियों को पारिमाण्डल्यरूप विषय की सत्ता अपेक्षित नहीं है ]

यही मूल में कहा है कि "इदमपि योगिप्रत्यक्षे" इत्यादि ग्रन्थ से । प्रश्न-घटत्वरूप जो सामान्यलक्षणा अलौकिक सन्निकर्ष उससे घटत्वाश्रय सकल घट का जैसे "सर्वे घटा:" इत्याकारक अलौकिक प्रत्यक्ष होता है—वैसे ही अणुपरिमाणवत्त्वेन रूपेण अणुपरिमाणाश्रय निखिल परमाणु तथा द्वयणुक आदि का भी अलौकिक प्रत्यक्ष या अलौकिक मानस प्रत्यक्ष में इन्द्रिय जन्यत्व या लौकिक सान्निकर्ष की अपेक्षा नहीं है । मानसात्मक प्रत्यक्ष "सर्वेऽणवः" इत्याकारक होता है, सो इस अलौकिक प्रत्यक्ष के प्रति कारणीभूत जो अणुपरिमाणरूप ज्ञायमान सामान्य उसे कारणता स्पष्ट ही है । एवं "पारिमाण्डल्यं स्वेतरभिन्नं पारिमाण्डल्यात्" इस स्वेतरभेदानुमिति में पारिमाण्डल्य को तादात्म्येन कारणता है - सो कैसे कहा कि पारिमाण्डल्य कारण नहीं है । उत्तर—अलौकिक प्रत्यक्ष में ज्ञायमान सामान्य प्रत्यासत्ति (सन्निकर्ष) विधया कारण नहीं है— अपितु सामान्यज्ञान कारण है । इसी अभिप्राय से हमने कहा कि "ज्ञायमान सामान्य कारण नहीं हैं । ऐसे ही इतरभेदानुमिति में पारिमाण्डल्यज्ञान ही विषयतासम्बन्ध से कारण है-न कि पारिमाण्डल्य । प्रश्न—आपने कहा कि "विशेषाश्च बोध्या:" विशेष भी किसी का कारण नहीं है-ऐसा जानना चाहिये । (अर्थात् पारिमाण्डल्य की तरह विशेष का भी "अकारणत्व" साधर्म्य,है-सो यह आपका कथन कैसे संगत हो सकता है क्योंकि "घटपरमाणुः पटपरमाणुतो भिन्नः विशेषात्" यहाँ पर जब घटपरमाणु में पट परमाणु का भेद सिद्ध करनेवाला कारण विशेष ही है

**मानं लिङ्गं नानुमितिकरणमित्यभिप्रायेणोक्तम्। आत्ममानसप्रत्यक्षे आत्मपरममहत्त्वस्य कारणत्वान्महत्परिमाणमाकाशादेर्बोध्यम्। तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये। तन्न, ज्ञानतिरिक्तं प्रत्येवाकारणताया आचार्यैरुक्तत्वात् ॥ १५ ॥**

अतः विशेष भी परमाणुद्रव्य के भेद साधन में कारण है ही। उत्तर—ज्ञायमानलिङ्ग अनुमिति का कारण नहीं है (अपितु लिङ्गज्ञान अनुमिति का करण है) इस अभिप्राय से (हमने कहा कि विशेष किसी का कारण नहीं है—अर्थात् परमाणुद्रय के भेद का कारण नहीं अपितु विशेषज्ञान है) प्रश्न—आपने कहा कि परममहत्परिमाण किसी का कारण नहीं है—यह ठीक नहीं—आत्मा के मानसप्रत्यक्ष में आत्मा का परममहत् परिमाण कारण है जैसे घट के प्रत्यक्ष में घट का महत्परिमाण कारण होता है)। उत्तर—(हमने जो कहा कि परममहत्परिमाण कारण नहीं है—वह अकारणीभूत परममहत्परिमाण) आकाश—काल—दिशा का लेना चाहिये। वही मूल में कहा है कि "परममहत्परिमाणमाकाशादेर्बोध्यम्"। अन्य लोगों का कहना है कि आत्मा का परममहत्परिमाण भी कारण नहीं है—यह आचार्य (उदनाचार्य) का आशय है। सो ठीक नहीं है—उदयनाचार्य ने आत्मा के परममहत् परिमाण को जो अकारणत्व कहा है वह केवल ज्ञानातिरिक्त के प्रति और आत्मा का जो मानस प्रत्यक्षात्मक ज्ञान उसके प्रति तो आत्मा के परममहत् परिमाण को कारणता है ही। वही मूल में कहा है कि—"ज्ञानातिरिक्तं प्रत्येवाकारणतायाः" इत्यादि से।१५।

---

नित्यपरिमाणस्य कार्यतावच्छेदकवत्तया व्यभिचारेण तथा वक्तुमशक्यत्वात्, जन्यत्वप्रवेशे गौरवात्, लाघवाय सामानाधिकरण्यसंबन्धेन महत्समवेतवृत्तित्वविशिष्टपरिमाणत्वस्य जन्यतावच्छेदकत्वोक्त्या त्र्यणुकपरिमाणत्वस्य जन्यतावच्छेदकत्वात्। वस्तुतस्तु उत्कृष्टानुत्कृष्टपरिमाणोत्पत्त्या तत्तत्परिमाणविशेषे तत्तत्परिमाणत्वेन हेतुतया सामान्यहेतुतायां मानाभावात्। विशेषश्च परिमाणनिरूपणे वक्ष्यामः। पारिमाण्डल्यशब्द उपलक्षणमित्याह। **एवमिति**। ननु त्रयाणामपि विषयविधया योगिप्रत्यक्षे कारणत्वमस्त्येवेत्यत आह **इदमपीति** इत्यभिप्रायेणेत्यत्रान्वेति। वस्तुतोऽहेतुत्वं युक्तमेव, प्रत्यक्षे विषयस्य हेतुत्वमते अतीतघटादौ विषयतया प्रत्यक्षोत्पादेन व्यभिचाराल्लौकिकविषयतासंबन्धस्य कार्यतावच्छेदकत्वमुपगन्तव्यम्। तथाच योगिनः परममहत्परिमाणप्रत्यक्षेपि परममहत्परिमाणस्य न कारणत्वम्, लौकिकविषयत्वविरहादिति भावः। ननु गुरुत्वादेः स्वाश्रयसकलगुरुत्वादिमानसे हेतुत्वादतीन्द्रियसामान्यं न कारणमिति न युक्तमित्यत आह **ज्ञायमानं** सामान्यं न प्रत्यासत्तिरिति। वक्ष्यमाणयुक्तेरिति भावः। ननु विशेषाणां स्वाश्रये व्यावृत्तिबुद्धिजनकत्वाद्विशेषाश्चेति न युक्तमित्यत आह **ज्ञायमानं लिंगमिति**। वक्ष्यमाणदोषादिति भावः। **आत्ममानसप्रत्यक्षे इति**। सामान्यतो द्रव्यप्रत्यक्षे महत्परिमाणत्वेन हेतु-

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्त्तितम्॥ १६॥
समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम्॥ १७॥

ननु कारणत्वं किम्? अत आह-अन्यथासिद्धीति। तस्य कारणत्वस्य। १६—१७॥

"अन्यथासिद्धिशून्यस्य"

प्रश्न—पूर्वकारिका में जो आपने कहा कि पारिमाण्डल्य से भिन्नों का कारणत्व साधर्म्य है—वह कारणत्व क्या वस्तु है। तथा कितने प्रकार का है। उत्तर—अन्यथासिद्धि शून्य पदार्थ का जो नियम से कार्य के पूर्व में रहना यही कारणत्व है। और वह कारणता तीन प्रकार की है—समवायिकरणत्व–असमवायिकरणत्व–और तृतीय न्यायमत को जाननेवालों ने 'निमित्त-कारणत्व' बतलाया है। यह कारिका का अर्थ हुवा। १६–१७।

---

तया आत्ममानसप्रत्यक्षेपि परममहत्परिणामस्य हेतुत्वादिति भावः। आकाशादेरित्यादिना कालदिशोः परिग्रहः। तस्यापि=परममहत्परिमाणस्यापि। ज्ञानातिरिक्तं प्रत्येवाऽकारणताया इति। तथा च ज्ञानातिरिक्तकार्यं प्रत्यकारणत्वं वदद्भिराचार्यैर्ज्ञानं प्रति तस्य कारणत्वाभ्युपगमादिति भावः।

मूले-अन्यथासिद्धिशून्यस्येति षष्ठ्यर्थो निष्ठत्वम्। नियता=व्यापिका। धूमनियता वह्निरित्यादौ व्यापकत्वविशिष्टे एव तत्प्रयोगात्। पूर्ववर्त्तिता=कार्याव्यवहितपूर्वकालवृत्तित्वम्। कारणत्वं=कारणत्वशब्दव्यवहार्यम्। कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकतावच्छेदकधर्मवत्त्वमिति पर्यवसितोऽर्थः। अत्र च प्रतियोगिता कारणतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या, नातः कार्याधिकरणनिष्ठसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकधर्मवत्त्वाद् दण्डादावव्याप्तिः। कार्याधिकरणमपि कार्यतावच्छेदकसंबन्धेन ग्राह्यम्, नातः संयोगेन कार्याधिकरणपटनिष्ठाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकधर्मवत्त्वाद् दण्डादेरव्याप्तितादवस्थ्यम्।

न च कार्याव्यवहितप्राक्कालावच्छेदेनेत्यस्य कार्याव्यवहितकार्यप्रागभावावच्छिन्नसमयावच्छेदेनेत्यर्थो वाच्यः, तथासति घटादिप्रागभावस्य घटाद्यहेतुत्वापत्तेः, घटादिप्रागभावस्य घटप्रागभावावच्छिन्नसमयावच्छेदेन कार्याधिकरणावृत्तितया कार्यप्रागभावावच्छिन्नसमयावच्छेदेन कार्याधिकरणनिष्ठाभावप्रतियोगितावच्छेदक-

घटप्रागभावत्ववत्त्वादिति वाच्यम्। समये प्रागभावावच्छिन्नत्वस्यानिवेशात, किन्तु प्रागभावोपलक्षितत्वस्यैवेति नानुपपत्तिः।

न चैवमनवच्छेदकधर्मवत्त्वरूपस्य कारणत्वस्यांगीकारे कार्यकारणभावग्रहोत्तरकालं कारणतावच्छेदको धर्मः कल्प्यते इति मिश्रोक्तिरयुक्ता स्यादिति वाच्यम्। सामान्यतोऽनवच्छेदकधर्मवत्त्वग्रहस्य प्रथमतो विधिवशादुत्पत्तौ बाधकाभावात्, स्ववृत्तिविजातीयस्वर्गत्वावच्छिन्नाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकविजातीययागत्ववत्त्वरूपकारणत्वसंबन्धेन स्वर्गस्य यागे प्रकारतयाऽन्वये बाधकाभावाच्च। न च सहस्रादितन्तुकपटादौ चरमतन्तुसंयोगस्य तद्व्यक्तित्वेन कारणत्वानुपपत्तिः, तद्व्यक्तित्वस्य पटाधिकरणतत्क्षणान्तरनिष्ठाभावप्रतियोगितानवच्छेदकतया तथाविधानवच्छेदकधर्मवत्त्वाभावादिति वाच्यम्। तत्र कार्याधिकरणस्थूलकालनिष्ठतदव्यवहितपूर्वक्षणावच्छिन्नाभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपकारणत्वस्य सत्त्वात्। न च यागादौ स्वर्गकारणतायाः स्वर्गाव्यवहितपूर्वक्षणावच्छिन्नत्वघटितत्वे एवाऽपूर्वकल्पनं प्रसज्यते, तस्याः स्वर्गाधिकरणस्थूलकालनिष्ठाभावप्रतियोगितानवच्छेदकविजातीययागत्ववत्त्वरूपत्वे तु बाधकाभावादपूर्वकल्पनं मुधेति वाच्यम्। अव्यवहितपूर्वक्षणावच्छिन्नाभावप्रतियोगिनि नेदं कारणमित्यबाधितप्रतीतेः कारणतायास्तद्घटितत्वात्। अत एव कारणत्वं नातिरिक्तम्, अपूर्वकल्पनोच्छेदापत्तेः। न चास्तां तदुच्छेदः, अतिरिक्तकारणतायां उक्तधर्मस्यैतद्व्यंजकतायां च गौरवप्रसंगात्। किंचातिरिक्तकारणत्ववादिनां मतेऽनवच्छेदकत्वग्रहप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिनि तथाविधावच्छेदकत्वज्ञाने कारणत्वग्रहप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं कल्पनीयमित्यधिकं गौरवम्। न च तवाप्यन्वयज्ञानस्य कथं कारणताग्रहप्रतिबन्धकतेति वाच्यम्। वक्ष्यमाणानन्यथासिद्धत्वग्रहं प्रत्युक्तव्यभिचारज्ञानाभावस्योपयोगात्। अथ यादृशदण्डो भ्रमिमुत्पाद्य विनष्टः, तत्र कार्याधिकरणनिष्ठाभावीयकारणतावच्छेदकसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकधर्मवत्त्वाद्दण्डादेरव्याप्तिस्तदवस्था। न च स्वजन्यभ्रमिवत्तासंबन्धेन दण्डस्य हेतुतया तत्संबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकदण्डत्ववत्त्वं दण्डादौ सुलभमेवेति वाच्यम्। अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तत्कार्यं प्रति तदन्यथासिद्धमिति दण्डादेरन्यथासिद्ध्यापत्तेरिति चेत्। मैवम्। अन्यं प्रतीत्यस्य फलाननुगुणमन्यं प्रतीति वक्तव्यम्। अनुगुणत्वं चात्र प्रयोजकत्वम्। तच्च कारणतावच्छेदकसबन्धस्याप्युक्ततमिति। तेन स्वजन्यभ्रमिवत्तासंबन्धेन दण्डादेर्हेतुत्वनये स्वातन्त्र्येण भ्रमेरहेतुत्वेपि न क्षतिः। आकाशस्य तु फलाननुगुणशब्दं प्रति पूर्ववर्त्तित्वं गृहीत्वैवाकाशत्वेन घटहेतुत्वं ग्राह्यमिति भवत्यन्यथासिद्धिः। यदा तु पञ्चमान्यथासिद्धिवाद एव श्रेयान् तेन परेषां चरितार्थत्वादिति मतमनुमन्यते, तदा तु न दोषलेशोपोति मन्तव्यम्।

वस्तुतस्तु कार्याव्यवहितप्राक्कालावच्छेदेन कार्याधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकस्व-स्वव्यापारान्यतरत्ववत्त्वमेव कारणत्वपदार्थः, न चात्र दोषोस्तीत्यनवद्यम्।

यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत्।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात्॥ १८॥

तत्रेति। समवायिकारणे आसन्नं प्रत्यासन्नं कारणं द्वितीयमसमवायिकारण-मित्यर्थः। अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात्, एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात्। तथापि पटासमवायि-

"यत्समवेतं कार्यं भवति"

जिसमें समवायसम्बन्ध से कार्य उत्पन्न हो वह उस कार्य का ,समवायिकारण कहलाता है। (जैसे घटकार्य कपाल में समवायसम्बन्ध से उत्पन्न होता है—अतः कपाल घट का समवायिकारण हुवा)। तथा जो समवाय सम्बन्ध से समवायिकरण में रहता हो–अथ च उस कार्य का जनक हो वह असमवायिकारण होता है। (जैसे कपालद्वयसंयोग घट के समवायिकरण कपाल में रहता भी है अथच घट का कारण भी है अतः कपालद्वयसंयोग घट का असमवायिकारण हुवा, एवं घटरूप के प्रति कपालरूप असमवायिकारण है)। इन दोनों से भिन्न हो–अथ च कारण हो–वह निमित्तकारण होता है। प्रश्न—यद्यपि यहाँ असमवायिकारण लक्षणानुसार तुरीतन्तुसंयोग पट का असमवायिकरण हो जावेगा–(क्योंकि तुरीतन्तुसंयोग पट का समवायिकारण जो तन्तु उसमें रहता भी है–और पट का कारण भी है। एवं वेग भी अभिघाताख्य संयोगका असमवायिकरण हो जायगा। क्योंकि वेग अभिघाताख्यसंयोग के समवायिकारण में समवाय-सम्बन्ध से रहता है तथा अभिघातका कारण भी है—अर्थात् जिस द्रव्य में वेग उत्पन्न होगा वह वेग उसी द्रव्य में अभिघाताख्य संयोग कों उत्पन्न करेगा। जैसे दो मेंढों के वेग से आकर मिलने (संयोग होने) पर जो शब्द होता है वही अभिघाताख्य संयोग है।

ऐसे ही ज्ञान इच्छा का–इच्छा प्रवृत्ति का–असमवायिकरण हो जायगा। (क्योंकि ज्ञान इच्छा के समवायिकारण आत्मा में समवायसम्बन्ध से रहता भी है–और इच्छा का कारण भी है–क्योंकि ज्ञान होने पर ही इच्छा होती है। आदि पद से प्रयत्न को ले लेना–सिद्धान्त में ऐसा है कि आत्मा के विशेषगुण कहीं भी असमवायिकारण नहीं होते हैं–इससे यही निष्कर्ष निकला कि पूर्वोक्त असमवायिकारण लक्षण की पूर्वोक्त तत्तत्स्थलों में अतिव्याप्ति हो जावेगी। जैसे पट असमवायिकारण लक्षण की तुरीतन्तुसंयोग में। अभिघात के असमवायिकारण लक्षण की वेग में। आगाड़ी भी ऐसे ही समझ लेना।

---

तस्येत्यनेनान्यथासिद्धिशून्यस्येति भ्रमो माभूदित्यतो व्याचष्टे तस्य= कारणत्वस्येति। मूले यत्समवेतमिति। तथाच समवायसंबन्धावच्छिन्नकार्यता-निरूपिततादात्म्यसंबन्धावच्छिन्नकारणताशालित्वं समवायिकारणलक्षणमिति भावः। द्रव्यत्वमेव समवायिकारणत्वमिति तु परमार्थः। अत्र च सर्वत्र कारणत्व-स्वरूपकथनं कारणानां लक्षणं द्रष्टव्यम्, अत एव समवायिजनकमित्यादिशब्दाः साधु संगच्छन्ते, इतरथा वदक्षरतापत्तेरिति बोध्यम्।

कारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयम्। तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव। एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयम्। आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वं नास्ति, तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव।

उत्तर—उन-उन कार्यों के असमवायिकारण के लक्षणों में "तत्तद्भिन्नत्व" विशेषण दे देना। जैसे पट के असमवायिकारण के लक्षण में "तुरीतन्तुसंयोगभिन्नत्व" विशेषण दे देना। अब निष्कृष्ट लक्षण—तुरीतन्तु संयोग भिन्नत्वे सति पटसमवायिकारणे प्रत्यासन्नत्वे सति पटकार्यजनकत्वं पटासमवायिकारणत्वम्-यह हुवा) तुरीतन्तु संयोग तुरीपटसंयोग के प्रति असमवायिकारण होता ही है। ऐसे ही वेग भी वेग तथा स्पन्द के प्रति असमवायिकारण होता ही है। आत्मा के विशेषगुण कहीं भी असमवायिकारण नहीं होते हैं। (और असमवायिकारण का लक्षण आत्मा के ज्ञान-इच्छा-वगैरह विशेषगुणों में जा रहा है-अतः उस के गमनप्रयुक्त अतिव्याप्ति वारणार्थ) ज्ञानादिभिन्नत्व विशेषण असमवायिकारण के सामान्य लक्षणमे अवश्य ही दे देना चाहिये।

---

**कारणमिति**। अन्यथासिद्धस्य कपालत्वादेर्निरासायेयमुक्तिः। **स्यादिति**। पटसमवायिकारणे तन्तौ तुरीतन्तुसंयोगस्य वर्त्तमानत्वादिति भावः। अत्रापीष्टापत्तौ तुरीतन्तुसंयोगनाशात्पटनाशापत्तिः, असमवायिकारणनाशात्कार्यद्रव्यनाश इति सिद्धान्तात्। तन्तुसंयोगानां पटाऽसमवायिकारणत्वस्येष्टत्वादाह **तुरीति**। अत्र न तुरीतन्तुसंयोगत्वेन हेतुत्वम्, समवायेन पटत्वावच्छिन्नं प्रति तुरीसंयोगत्वेनैव हेतुत्वात्, तथाप्यनेन रूपेण तुरीतन्तुसंयोगस्य हेतुत्वं निष्प्रत्यूहम्। ननु समवायिकारणमात्रे आसन्न इत्युक्तौ न दोष इत्यत आह **एवमिति**। वस्तुतो न तुरीतन्तुसंयोगे पटासमवायिकारणत्वापादनं युक्तम्, तुरीशून्यदशायां पटोत्पादवारणाय संयोगेन तुरीत्वेनैव हेतुत्वम्। तुरीसंयोगत्वापेक्षया तुरीत्वस्य कारणतावच्छेदकत्वे लाघवात्। नचैवं संयोगेन चक्षुरादीनामेव हेतुतया निर्वाहेण चक्षुरादिसंयोगत्वेन हेतुता विलीयेतेति वाच्यम्। तत्र प्रमाणत्वानुरोधेन तत्कल्पनाया आवश्यकत्वात्। न चैवं तुरीतन्तुसंयोगादेस्तन्त्वभावेपि तुर्यादेर्हेतुतया तस्यैवाऽसमवायिकारणत्वापत्तिरिति वाच्यम्। अत्र प्रत्यासन्नत्वस्य समवायसंबन्धावच्छिन्नवृत्तित्वपरतया तत्र दोषाभावात्, अन्यथा तन्त्वादीनां तादात्म्येन समवायिकारणे प्रत्यासन्नतया हेतुतया चातिप्रसंगादित्यस्वरसादाह **एवमितीत्यस्मद्गुरुचरणाः**।

यत्तु संयोगेन तुरीत्वेन हेतुत्वे कारणतावच्छेदकसंबन्धत्वकल्पनाया अनेकनिष्ठतया गौरवेण लाघवात्समवायेन तुरीसंयोगत्वेन हेतुत्वम्, गुरुभूतेप्येकस्मिन् कारणतावच्छेदकत्वकल्पनातोऽनेकत्र कारणतावच्छेदकत्वकल्पनाया गरीयस्त्वात्,

अत्र समवायिकारणे प्रत्यासन्नं द्विविधं-कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च। आद्यं यथा—घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम्। तत्र कार्येण घटेन सह कारणस्य कपालसंयोस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति। द्वितीयं यथा—घटरूपम् प्रतिकपालरूपमसमवायिकारणं स्वगतरूपादिकं प्रति समवायिकारणं घटः, तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति। तथा च क्वचित्समवायसम्बन्धेन क्वचित्स्वसमवायिसमवायसम्बन्धेनेति फलितोऽर्थः।

( समवायिकारण में रहने वाला जो कारण वही तो असमवायिकारण होता है ) सो असमवायिकारण का समवायिकारण में रहना दो प्रकार से होता हैं। प्रथम जैसे "कार्यैकार्थप्रत्यासत्या" कार्य के साथ एक अर्थ (अधिकरण में रहना जैसे कार्य जो घट उसके साथ कारण कपाल संयोग एक (अर्थ) कपाल में रहता है। अर्थात् घटात्मक कार्य भी अपने समवायिकारण कपाल में है— और वहाँ कपाल संयोग भी है अतः कपालसंयोग घटकार्य के प्रति "कार्यैकार्थ प्रत्यासत्ति" द्वारा

---

अतस्तुरीतन्तुसंयोगे पटासमवायिकारणत्वापादनं युक्तमेवेति। तन्न। कारणतावच्छेदकग्रहस्य प्राथमिकतया प्रथमग्रहे लघुभूतधर्मे कारणतावच्छेदकत्वग्रहे तदुत्तरकल्पनाया फलमुखतयाऽदोषादिति। **वेगादीनामिति।** आदिना वाय्वाकाशसंयोगपरिग्रहः। **अभिघातादीत्या**दिना शब्दपरिग्रहः। अभिघातत्वं च संयोगत्वव्याप्यो जातिविशेषः। तदवच्छिन्ने च क्रियाया एवाऽसमवायिकरणत्वं न वेगस्य, सामान्यतः संयोगत्वावच्छिन्नं प्रति क्रियात्वेनाऽसमवायिहेतुत्वात्। वेगस्य तु निमित्तमात्रत्वात्तत्रातिव्याप्तिः। ननु वेगस्य न साक्षादभिघातजनकत्वं किन्तु स्पन्दजननद्वारा, तत्रापि वेगजन्यतावच्छेदकं न स्पन्दत्वं, विनापि क्रियोत्पादात्, अपि तु वेगजन्यतावच्छेदकतया सिद्धा क्रियात्वव्याप्या जातिरेवाभ्युपेया, तथाच तादृशजात्यवच्छिन्नं प्रति वेगत्वेन हेतुत्वम्, तादृशविजातीयक्रियात्वेन अभिघातत्वावच्छिन्ने च हेतुत्वमुपगम्यते इति वेगस्याभिघातहेतुतायां मानाभाव इति चेन्न। अभिघातत्वावच्छिन्नं प्रति विजातीयक्रियात्वेन वेगत्वेन वा हेतुहेतुमद्भाव इत्यत्र नियामकाभावेन वेगहेतुताया अपि सिद्धेः।

वस्तुतो विजातीयक्रियात्वेनैवाभिघातहेतुत्वं वेगनाशेपि क्रिययाऽभिघातजननाद्व्यभिचारेण वेगत्वेन हेतुत्वाभावो निर्व्यूढ इति चिन्तनीयम्। एतदस्वरसादेव वाह **ज्ञानादिकमिति।** गुरवस्तु स्वकार्य-स्वाश्रयसमवेतानपेक्षकं यत् यत्समवायिकारणे प्रत्यासन्नं कारणं तत् तदसमवायिकारणमित्युक्तौ दोषाभावादाह **ज्ञानादिकमितीति** वदन्ति। **स्यादिति।** ज्ञानस्य इच्छासमवायिकारणे प्रत्यासन्नत्वादिति

इत्थं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्यवसन्नम्। आभ्यां = समवायिकारणासमवायिकारणाभ्यां, परं = भिन्नं, कारणं तृतीयं = निमित्तकारणमित्यर्थः ॥१८॥

येन सह पूर्वभावः, कारणमादाय वा यस्य।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥१९॥
जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥२०॥
एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम्।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥२१॥
तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥२२॥

असमवायि कारण हो गया। द्वितीय जैसे—घटरूप के प्रति कपालरूप असमवायिकारण होता है। यहाँ अपने रूपादि के प्रति समवायिकारण घट है, उस घट के साथ कपालरूप एक (अधिकरण) कपाल में वर्त्तमान है। (यहां प्रत्यासत्ति शब्द का अर्थ है सम्बन्ध वह सम्बन्ध बिना किसी पदार्थ के रहे बन नहीं सकता है अतः हमने प्रत्यासत्तिशब्द का "सम्बन्ध" अर्थ न करके "रहना" ही अर्थ किया) इस प्रकार कारणता के नियामक दो सम्बन्ध हैं—आद्य पक्ष में अर्थात् कार्यैकार्थ-प्रत्यासत्तिपक्ष में "समवाय" अर्थात् घट कार्य के साथ कपालसंयोग समवायसम्बन्ध से कपाल में है अतः कपाल संयोग की कारणता का नियामक समवाय सम्बन्ध है। द्वितीयपक्ष में "स्वसमवायिसमवेतत्व" कारणता का नियामक है—"समवेतत्व" प्रकृत में "समवाय" रूप है। जैसे घटरूप के प्रति कपालरूप "स्वसमवायि समवाय"सम्बन्ध से कारण होता है—स्वपद से कारण जो कपालरूप उसे लिया—उसका समवायी कपाल—उसका समवाय रहा घट में—इस सम्बन्ध से घटरूप के प्रति कारण जो कपालरूप वह भी घट में है—और घटरूप भी घट में—अतः घटरूप के प्रति कपालरूप असमवायि कारण हो गया।

वही मूल में कहा है कि "क्वचित्समवायसम्बन्धे"नेत्यादि। इस प्रकार कार्य के साथ या-कारण के साथ समवायिकारणरूप एक अर्थ में अन्यतर ( दोनों में से एक ) प्रत्यासत्ति ( सम्बन्ध ) से रहने वाला जो ज्ञानादिभिन्न कारण वही असमवायि कारण होता है। समवायिकारण तथा असमवायिकारण इन दोनों से भिन्न जो कारण वह निमित्तकारण तृतीय कारण है

---

भावः। तुरीतन्तुसंयोगभिन्नत्वमिति। समवायिकारणभिन्नसमवेतभिन्नत्वं विशेषणं देयमिति भावः, अत्रेदं संभवप्रायादुक्तम्, वस्तुतस्तु विशिष्य कार्यासमवायि-

कारणलक्षणे प्रविष्टकारणत्वं न सामान्यतः कार्याधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकाऽन्यथासिद्ध्यनिरूपकतावच्छेदकधर्मवत्त्वरूपमिह विवक्षितम्, अपि तु पटासमवायिकारणलक्षणे पटसमवायिकारणनिष्ठाभावप्रतियोगितानवच्छेदकतन्तुसंयोगत्वरूपधर्मवत्त्वम् । एवं वेगादीनामपि नाऽभिघाताऽसमवायिहेतुत्वम्, तत्रापि अभिघातवन्निष्ठाभावप्रतियोगितानवच्छेदकस्पन्दत्ववत्त्वम् वक्तव्यमिति न दोषः। वस्तुतस्तु अभिघातान्तर्भावेन न निवेशो वाच्यः, किन्तु संयोगवन्निष्ठाभावप्रतियोगितानवच्छेदकस्पन्दत्ववत्त्वनिवेशेनैव संयोगसाधारण्येन स्पन्दादिहेतुत्वं निर्वहतीत्यन्यत्र विस्तरः। अत्र सामान्यलक्षणविशेषलक्षणेषु निविष्टकारणत्वघटकीभूताभावे प्रतियोगिवैयधिकरण्यं निवेशनीयम्, नातस्तन्तुसंयोगादेर्हेतुत्वानुपपत्तिः । न च तर्हि अन्यथासिद्ध्यनिरूपकतावच्छेदकत्वनिवेशो व्यर्थः, इष्टापत्तेः, तस्य सामान्यलक्षणे एव निवेशात् ।

यत्तु निमित्तहेतुत्वाश्रयभिन्नवृत्तिकारणत्वस्याऽसमवायिकारणे निवेशान्नोक्तदोष इति, तन्न, वक्ष्यमाणनिमित्तहेतुत्वस्यासमवायिहेतुभेदघटितत्वेनाऽन्योन्याश्रयात् ।

नन्वत्र प्रत्यासन्नत्वं समवायेन वृत्तित्वरूपमेव, तथा च समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वमसमवायिकारणत्वं फलितम्, एवं च सति पटरूपाऽसमवायिकारणे तन्तुरूपेऽव्याप्तिः, तन्तुरूपस्य पटरूपाऽसमवायिकारणे पटे प्रत्यासन्नत्वाभावादित्यत आह **अत्रेति** ।

नन्वेवं "उक्तान्यतरप्रत्त्यासत्त्या समवायिकारणे प्रत्यासन्नं ज्ञानादिभिन्नं कारणमसमवायिकारणमिति लक्षणं पर्यवसितम्, तच्च न संभवति, द्रव्यत्वादेः स्वप्रत्यक्षेऽसमवायिकारणत्वापत्तेः, द्रव्यत्वस्य प्रत्यक्षसमवायिकारणात्मनि प्रत्यासन्नत्वात्, विषयविधया कारणत्वाच्च । न च कारणत्वमुक्तान्यतरप्रत्यासत्त्या ग्राह्यमिति वाच्यम् । एवंसति कारणत्वमात्रस्यैव लक्षणौचित्यात्, तथैव पर्यवसितलक्षणमाह **इत्थंचेति** । तथाच समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवाय-स्वसमवायिसमवायान्यतरसंबन्धावच्छिन्नकारणताश्रयत्वमसमवायिकारणत्वं फलितम् । अत्र ज्ञानादिभिन्नत्वविशेषणमिच्छादिकं प्रति ज्ञानादिकं समवायेन हेतुरिति मत्वाभिहितम् । वस्तुतो विषयताप्रत्यासत्त्या कारणत्वान्नोपादेयमेव तत् ।

**निमित्तकारणमिति** । तथाच समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणत्वं फलितम् । ननु ईश्वरघटसंयोगे ईश्वरस्य निमित्तत्वानुपपत्तिः, तस्य द्रव्यत्वेन रूपेण संयोगहेतुत्वात् समवायिकारणभेदविरहात्, इष्टापत्तौ तु कार्यमात्रे निमित्तत्वसिद्धान्तापलापापत्तिरिति चेत् । मैवम् । यद्धर्मावच्छिन्नकार्यतानिरूपितसमवायिकारणताशून्यत्वविशिष्टयद्धर्मावच्छिन्नकार्यतानिरूपितासमवायिकारणताशून्यत्वसमानाधिकरणयद्धर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वं, तद्धर्मावच्छिन्नं प्रति तस्य निमित्तत्वम्, अस्ति चेश्वरस्य जन्यत्वावच्छि-

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामत आह—येनेति । यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्य्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः । यथा घटं प्रति दण्डत्वमिति । द्वितीयमन्यथासिद्धमाह—कारणमिति । यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः, किं तुकारणमादायैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम्, यथा दण्डरूपम् । तृतीयमाह—

अन्यथासिद्ध बतलाते हैं—येन सह इत्यादि ग्रन्थ से -

यस्य—जिस कारण को–(जिस कार्य के प्रति) पूर्वभाव–(पूर्ववृत्तित्व) अर्थात् कारणत्व-येन सह जिसरूप से ( गृहीत होता है ) । वह रूप ( उस कार्य के प्रति पूर्ववर्त्ती होते हुवे भी ) अन्यथा सिद्ध ही है । जैसे घट के प्रति दण्डत्व । अर्थात् घट के प्रति दण्ड को दण्डत्वेन रूपेण कारणता है अतः घट के प्रति दण्ड कारण दण्डत्व अन्यथा सिद्ध है—क्योंकि घट के प्रति दण्डत्व का कोई भी उपयोग नहीं है ।

द्वितीय अन्यथा सिद्ध बतलाते हैं—"कारणमादाय वा यस्य" अथवा कारण के ग्रहण-पूर्वक जिसका ग्रहण हो वह भी अन्यथा सिद्ध होता है । अर्थात जिसका जिस कार्य के प्रति स्वतंत्ररूप से अन्वयव्यतिरेक नही बन सकता किन्तु कारण को लेकर ही जिसके अन्वयव्यतिरेक का निश्चय जिस कार्य के प्रति किया जावे—वह भी इस कार्य के प्रति अन्यथा सिद्ध माना गया है । जैसे घट के प्रति दण्डरूप । ( दण्डरूप का घट के प्रति अन्वय व्यतिरेक अपने कारण दण्ड को लेकर ही बनता है-अतः दण्डरूप भी घट के प्रति दण्डत्व की तरह अन्यथासिद्ध ही है—क्योंकि दण्ड का रूप–दण्ड से अलग नहीं हो सकता है–जिससे कि वह

---

न्नकार्यतानिरूपितसमवायिकारणताशून्यत्वविशिष्टजन्यत्वावच्छिन्नकार्यतानिरूपिताऽसमवायिकारणताशून्यत्वसमानाधिकरणजन्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वमिति । न चैवं जन्यत्वावच्छिन्नकार्यतानिरूपितसमवायिकारणतायाः अप्रसिद्धत्वेन तच्छून्यत्वस्य सुतरामप्रसिद्धिः । एवमसमवायिकारणताशून्यत्वमपीत्यव्याप्तिः । अत्रोच्यते । यद्यद्धर्मावच्छिन्नकार्यतानिरूपितसमवायिकारणत्वं यद्यद्धर्मावच्छिन्नकार्यतानिरूपिताऽसमवायिकारणत्वं प्रत्येकं तत्तन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यद्धर्मावच्छिन्नकार्यतानिरूपितयद्यद्धर्मावच्छिन्नकारणत्वत्वं तद्धर्माश्रयं प्रति तद्धर्माश्रयस्य निमित्तकारणत्वमित्युक्तौ न कोपि दोषः ।

वस्तुतस्तु स्वसमवायिकारणत्वस्वाऽसमवायिकारणत्वाऽन्यतरशून्यत्वे सति कारणत्वं निमित्तकारणत्वं स्वत्वघटितं वाच्यम्, अन्यथा दण्डस्यापि स्वगतरूपसमवायिकारणत्वादसंभवापत्तेः । एवं च घटादिध्वंसनिमित्तकारणे दण्डादावव्याप्तिः घटध्वंससमवायिकारणत्वाप्रसिद्धेः । तथा च वस्तुविशिष्टत्वं निमित्तकारणत्वम् । वै० स्वकारणत्व-स्वाभाववत्त्वोभयसंबन्धेन । स्वाभावश्च समवायिकारणत्वाऽसमवायिकारणत्वाऽन्यतरसंबन्धावच्छिन्नप्रतियोगिताक इति नाप्रसिद्धिः ।

**यत्कार्यमिति** । अत्र च कार्यकारणशब्दौ यच्छब्दार्थकौ द्रष्टव्यौ । यमवच्छेदकीकृत्य यस्यान्वयव्यतिरेकौ गृह्येते तस्यावच्छेदकस्य तेनान्यथासिद्धिरित्यर्थः । **तद्रूपमन्यथासिद्धमिति** । तेन कारणेनेति शेषः । न च कदाचिद्दण्डरूपं घटपूर्ववृत्तीति ग्रहेऽवच्छेदकदण्डस्यापि रूपेणान्यथासिद्ध्यापत्तिरिति वाच्यम् । स्वतन्त्रान्वयव्यतिरेकशालिनो यस्येति स्वतन्त्रान्वयव्यतिरेकशून्यं यमिति वा विवक्षणात् । तेन दण्डवचक्रं घटनियतपूर्ववर्त्तीति ग्रहेपि न दण्डस्यान्यथासिद्धिः । मूले- **येन सहपूर्वभाव** इत्येकान्यथासिद्धिः । साहित्यमत्र पूर्ववर्त्तिग्रहविषयत्वेन, विशिष्टे पूर्ववर्त्तित्वग्रहे विशेषणेपि पूर्ववर्तित्वग्रहादिति बोध्यम् ।

कारणमादाय वा यस्येति मूले पूर्वभाव इत्यनुषज्यते । अत एव पूर्वभावपदस्य प्रथमवाक्यचरमावयवत्वं द्वितीयवाक्यादित्वं च चारु संगच्छते । वाशब्दः पूर्वभावपदस्याऽऽकर्षणार्थः । **कारणमितीति** । कारणं=पृथगन्वयव्यतिरेकशालिनम्, अन्यथा कारणत्वस्यान्यथासिद्धिकुक्षिनिविशिष्टत्वे आत्माश्रयापत्तेः । **यस्येति** । तथाच स्वतन्त्रान्वयव्यतिरेकशालिनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यनिष्ठयद्धर्मावच्छिन्नविशेष्यताशालिनो यद्धर्मावच्छिन्नं प्रति पूर्ववृत्तित्वं गृह्यते तद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्नं प्रति स्वतन्त्रान्वयव्यतिरेकशालिना तेनान्यथासिद्धिरित्यर्थः । भवति च दण्डरूपं घटपूर्ववर्त्तीतिग्रहीयतथाविषयताशालिनो रूपस्य स्वतन्त्रान्वयव्यतिरेकशालिना दण्डेनाऽन्यासिद्धिः । अत्र यन्निष्ठविषयतानिरूपितत्वमात्रनिवेशे दण्डरूपं घटपूर्ववर्त्तीतिग्रहीयरूपत्वनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यनिष्ठविशेषताशालिनो रूपस्य रूपत्वेनान्यथासिद्धिप्रसंगः । न चेष्टापत्तिः, कारणेनाऽकारणस्यान्यथासिद्धेरेव तान्त्रिकसंमतत्वात् । तत्र रूपस्येव रूपत्वस्याप्यहेतुत्वात् । न च स्वतन्त्रान्वयव्यतिरेकशालिनिष्ठविषयतानिरूपितयन्निष्ठविषयताशालिनो यद्धर्मावच्छिन्नं प्रतीत्येवास्तु, किं स्वतन्त्रान्वयव्यतिरेकशून्यस्योत्पादानेनेति वाच्यम् । यत्र दण्डचक्रयोर्घटपूर्ववर्त्तिताग्रहो 'दण्डवचक्रं घटपूर्ववर्त्ती-' त्याकारकः, तत्रैतद्ग्रहीयस्वतन्त्रान्वयव्यतिरेकशालिदण्डनिष्ठविषयतानिरूपितचक्रनिष्ठविशेष्यताशालिनश्चक्रादेर्दण्डेनान्यथासिद्धिप्रसंगः । युक्तं चैतत्, अन्यथाऽनेनैव दण्डत्वादेरन्यथासिद्धिसंभवे येन सह पूर्वभाव इत्यस्य वैयर्थ्यापत्तेः । अस्मन्नये तु दण्डः पूर्ववर्त्तीतिग्रहीयस्वतन्त्रान्वयव्यतिरेकशालिदण्डनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यनिष्ठविशेष्यताशालित्वाभावाद्दण्डत्वस्येति न वैयर्थ्यम् ।

अथ वह्न्यनुमितिं प्रति अप्रामाण्यग्रहाभावविशिष्टधूमपरामर्शत्वेन हेतुत्वं स्वातन्त्र्येण वाऽप्रामाण्यग्रहाभावस्य हेतुत्वम्, उभयथापि अप्रामाण्यग्रहाभावेन धूमपरामर्शस्याऽन्यथासिद्धिप्रसंगः । तत्रापि अप्रामाण्यग्रहाभावविशिष्टपरामर्शः पूर्ववर्त्तीत्याकारकग्रहीयस्वतन्त्रान्वयव्यतिरेकशाल्यप्रामाण्यग्रहाभावनिष्ठविषयतानिरूपितस्वतंत्रान्वयव्यतिरेकशून्यप्रकारकत्वनिष्ठपरामर्शत्वावच्छिन्नविशेष्यताशालिनो वन्ह्यनुमितित्वावच्छिन्नं प्रति पूर्ववर्तित्वग्रहादिति चेत् ।

अन्यं प्रतीति। अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम्, यथा घटादिकं प्रत्याकाशस्य, तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात्, आकाशत्वं हि शब्दसमवायिकारणत्वम्, एवं च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम्। ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत्? पञ्चमीति

स्वतंत्र घट के प्रति कारण बने। तृतीय अन्यथासिद्ध— अन्य कार्य के प्रति पूर्ववृत्तित्व (कारणत्व) का ग्रहण (निश्चय) करके ही जिसको जिस कार्य के प्रति पूर्ववृत्तित्व का निश्चय किया जाता है—वह उस कार्य के प्रति अन्यथासिद्ध है। जैसे घट के प्रति (आकाश नित्य एवं व्यापक होने के नाते कार्यमात्र के प्रति नियतपूर्ववर्त्ती है तो घट के प्रति भी नियतपूर्ववर्त्तित्वरूप कारणत्व सिद्ध ही है—परन्तु) आकाश को घटादि के प्रति कारणत्व आकाशत्वेन रूपेण मानना पड़ेगा—आकाशत्व है शब्दसमवायिकारणत्व (तो शब्दसमवायिकारणत्व कहने मात्र से ही आकाश शब्द का कारण है यह सिद्ध हो जाता है) इस प्रकार आकाश को शब्द के प्रति जनकत्व (कारणत्व) का निश्चय करके ही घटादि (कार्य) के प्रति जनकता का निश्चय करते हैं—(तब आकाश शब्द के प्रति ही कारण माना जावेगा—और घटादि के प्रति) अन्यथा सिद्ध ही होगा। प्रश्न—आकाशत्व यदि शब्दसमवायिकारणत्व हो तब आकाश को शब्द के प्रति कारणत्व निश्चय होने से घट के प्रति अन्यथासिद्धत्व बन जाता है—परन्तु आकाशत्व यदि शब्दाश्रयत्वरूप मान लिया जावे, तब तो शब्दाश्रयत्व से शब्द का कारण आकाश नहीं सिद्ध होता अपितु शब्द का आश्रय आकाश सिद्ध होता है तो) शब्दाश्रयत्वेन रूपेण आकाश को (घटादिके प्रति) कारण मानने में

---

न। स्वतन्त्रान्वयव्यतिरेकशून्यनिष्ठाऽखण्डधर्मावच्छिन्नविषयताशालित्वस्य विवक्षितत्वात्। धूमपरामर्शत्वस्याखण्डधर्मानात्मकतया दोषाभावात्। रूपत्वस्याऽखण्डधर्मत्वात्। एतेन कुलालजनको घटपूर्ववर्त्तीतिग्रहीयस्वतन्त्रान्वयव्यतिरेकशालिनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यनिष्ठयद्धर्मावच्छिन्नविषयताशालिनो घटपूर्ववर्त्तित्वग्रहात्स्वतन्त्रान्वयव्यतिरेकशालिना कुलालेनैव कुलालपितुरन्यथासिद्धिसंभवेन "जनकं प्रती"त्याद्यन्यथासिद्धिवैयर्थ्यम् इति निरस्तम। जनकत्वस्याखण्डत्वाभावात्।

यद्वा नाऽखण्डधर्मावच्छिन्नत्वस्य निवेशः, किन्तु स्वतन्त्रान्वयव्यतिरेकशून्ये स्वतन्त्रान्वयव्यतिरेकितावच्छेदकधर्मसामानाधिकरण्यस्य, धूमपरामर्शकुलालपित्रोस्तु न स्वतन्त्रान्वयव्यतिरेकितावच्छेदकाऽप्रामाण्यग्रहाभाववत्वकुलालत्वसामानाधिकरण्यम्, एतेन दण्डवद्रासभो घटपूर्ववर्त्तीतिग्रहीयोक्ताखण्डधर्मावच्छिन्नविशेष्यताशालित्वादनेनैव रासभान्यथासिद्धिसंभवे पञ्चमान्यथासिद्धिवैयर्थ्यमित्यपि परास्तम्। रासभादेरुक्तावच्छेदकासामाधिकरण्यात्। न चैतत्कल्पे स्वतन्त्रान्वयव्यतिरेकिताव-

गृहाण । नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत् ? कवत्वादिकं विशेषपदार्थो वेति । चतुर्थमन्यथासिद्धमाह जनकं प्रतीति । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा कुलालपितुर्घटं प्रति । तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वे एवान्यथासिद्धिः, कुलालत्वेन जनकत्वे त्विष्टापत्तिः, कुलालमात्रस्य घटं प्रति जनकत्वात् । पञ्चममन्यथासिद्धमाह–

कौन अन्यथासिद्ध आकाश होगा । उत्तर—पञ्चम अन्यथासिद्ध होगा । प्रश्न—(आकाश घट के प्रति कारण न हो) शब्द के प्रति तो आकाश कारण है–तब कारणतावच्छेदक कौन होगा उत्तर—कवत्व आदि । ( आदि पद से खवत्व-गवत्व इत्यादि को ले लेना ।

मतलब यह है कि "क" यह जो वर्णात्मक शब्द तद्वान् आकाश ही होगा–अर्थात् "क" वान् हुआ आकाश-और आकाश ही शब्दमात्र का समवायिकारण है–कारणतावच्छेदक "कवत्व" हुवा क्योंकि कारण में रहने वाला धर्म कारणतावच्छेदक होता है । प्रश्न-(जैसे शब्दकारणता का अवच्छेदक कवत्व को आपने माना वैसे ही-खवत्व-गवत्व को भी कारणतावच्छेदक क्यों न माना जाय विनिगमनाविरहात्–क्योंकि "ख" शब्दवान् भी आकाश है 'खवत्व' आकाश में रहा । ऐसे ही "ग" शब्दवान् जब कि आकाश हुवा तो "गवत्व" भी आकाश में रहा तो ये सब भी कारणतावच्छेदक होगें) उत्तर—(अनन्त को कारणतावच्छेदक मानने की अपेक्षया) एक विशेषपदार्थ ही को (कारणतावच्छेदक क्यों न मान लिया जावे) वही मूल में कहा है कि "विशेषपदार्थो वा" । चतुर्थ अन्यथासिद्धि—जिस कार्य के जनक के प्रति पूर्ववृत्तित्व का निश्चय करके ही जिसको जिस कार्य के प्रति पूर्ववृत्तित्व का निश्चय करते हैं—वह उस कार्य के प्रति अन्यथासिद्ध होता है । जैसे कुलालपिता घट के प्रति । कुलालपिताको कुलालपितृत्वेन रूपेण घट के प्रति यदि कारण मानें तो वह कुलाल (कुम्हार) पितृत्व रूप से घट के प्रति अन्यथासिद्ध है । कुलालस्वरूप से यदि कारण मानें तो कारणता में इष्टापत्ति है । (क्योंकि कुलालस्वरूप से) कुलालमात्र ही घट के प्रति कारण होते हैं । अभिप्राय यह है कि कुलालपिता को समझकर घट के प्रति कारण मानते हैं कि यह घट का कारण जो कुलाल-उसका भी कारण है—अर्थात् जब यह घट के कारण का भी कारण है तो घट का कारण तो अवश्य ही है–ऐसी परिस्थिति में कुलालपिता अन्यथासिद्ध माना गया है । और कुलालत्वरूप से यदि घट के प्रति उसे कारण मानें-अर्थात् यह कुम्हार है यह समझकर यदि हम उसे कारण मानते हैं—तब कुलालपिता घट के प्रति कारण ही माना जायगा—क्योंकि कुलालमात्र ही घट के प्रति कारण माने गये है । जिस कुलाल ने अद्यावधि घट निर्माण ही नहीं किया उसमें भी घट की स्वरूपयोग्यत्वरूपा कारणता है ।

---

च्छेदकसामानाधिकरण्यस्यैव निवेशोऽस्तु, तथा च स्वतन्त्रान्वयव्यतिरेकशालिनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकितावच्छेदकसमानाधिकरणयन्निष्ठयद्धर्मा-

भस्मनो हि पाषाणध्वंसजन्यत्वात्पाषाणोपादानोपादेयत्वं सिद्धयति। यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः, दृष्टं चैतत्खण्डपटे

पलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते"। प्रश्न—पाषाण में उद्भूत-अनुद्भूत कोई भी गन्ध नहीं है—यही क्यों न मान लिया जावे। उत्तर—अन्यथा (पाषाण में यदि कोई भी गन्ध नहीं मानेंगे तो) पाषाण भस्म में गन्ध का प्रत्यक्ष कैसे होता है। क्योंकि पाषाण भस्म पाषाणध्वंस से जन्य है—अतः पाषाण भस्म पाषाण का उपादान (समवायिकारण) जो पाषाणपरमाणु उसका उपादेय (कार्य) है यह सिद्ध है। यह नियम है कि जो द्रव्य जिस द्रव्य के ध्वंस से उत्पन्न होता है वह द्रव्य उस द्रव्य के उपादान का उपादेय होता है। यह नियम वहाँ देखा गया है - जहाँ (थान) इत्यादि महापट को फाड़कर कई टुकड़े (उन टुकड़ों को ही खण्डपट

---

अत्रेदं बोध्यम्—लक्षणस्य प्रयोजनमितरभेदसिद्धिः व्यवहारसिद्धिश्च। "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजन"मित्यभियुक्तोक्तेः। तथा च प्रकृते पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्, यन्नैवं, तन्नैवं यथा जलमित्यनुमानं फलितम्। एवं पृथिवी "पृथिवी" इति व्यवहर्तव्या गन्धवत्त्वाद्, यन्नैवं तन्नैवं यथा जलमिति व्यवहारसिद्धिश्च भवति इति।

**अन्यथा**=गन्धत्वावच्छिन्नं प्रति हेतुत्वानंगीकारे। **आकस्मिकत्वापत्तेरिति**। गन्धत्वस्य जन्यतानवच्छेदकत्वापत्तेरित्यर्थः। तथा च जलादावपि गन्धोत्पादः स्यादिति भावः।

अथात्र किमिदमाकस्मिकत्वं गन्धत्वावच्छिन्नोत्पादनियामकसमवायिकत्वाभावो-गन्धत्वावच्छिन्नोत्पादकसामग्र्यभावकत्वं वा! नाद्यः, पृथिव्या एव "रूपान्तरेण" द्रव्यत्वेन हेतुतायाः क्लृप्तत्वात्, तत्साधकमानस्याधस्तादावेदितत्वात्। नान्त्यः, विजातीयगन्धत्वावच्छिन्ने गन्धादिघटितसामग्र्याः, विजातीयगन्धत्वावच्छिन्ने च तेजःसंयोगलक्षणपाकादिघटितसामग्र्याः क्लृप्तत्वेन तादृशसामग्र्यभावकत्वरूपाकस्मिकत्वसंभावनाया अप्यसंभवात् इति चेत्।

स्वमात्रवृत्तिजातिनिष्ठस्वहेतुवृत्तिहेतुतानिरूपितजन्यतानवच्छेदकत्वाश्रयवत्त्वं हि तत्, स्वपदद्वयं चाऽऽकस्मिकत्वेनाभिमतगन्धादिपरम्। जातिनिष्ठेत्यस्याऽनवच्छेदकत्वेन सहान्वयः। न च पृथिवीत्वेन हेतुत्वाभ्युपगमेपि ईदृशाकस्मिकत्वं गन्धादौ तदवस्थमेवेति वाच्यम्। "स्वहेतुवृत्ती"त्यनेन यावन्तः स्वहेतवः प्रत्येकं तद्वृत्तिहेतुतानिरूपितजन्यतानवच्छेदकत्वाश्रयवत्त्वस्य निर्गलितत्वात्। तादृशहेतुहेतुमद्भावाभ्युपगमे तु गन्धत्वस्य यावत्स्वहेतुमध्यनिविष्टपृथिवीवृत्तिहेतुतानिरूपितजन्यतावच्छेदकत्वेन नाकस्मिकत्वप्रसंगः। इत्थं च कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमवादोपि सूपपाद इति।

शंकते **नचेति**। **तत्रापि**=पाषाणेपि। ननु पाषाणे गन्धसत्त्वे उपलब्धिः कथं नेत्यत आह **अनुपलब्धिस्त्विति**। **अनुत्कटत्वेन**=अनुद्भूतत्वेन। ननु

महापटध्वंसजन्ये, इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वम्, तथा च तस्यापि गन्धसत्त्वे बाधकाभावः। नानारूपेति। शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्त्तते न तु जलादौ, तत्र शुक्लस्यैव सत्त्वात्, पृथिव्यां तु एकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसंभवात्। नच यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिरिति

कहते हैं ) वहाँ वह खण्डपट रूपी द्रव्य महापट रूपी द्रव्य के ध्वंस से जन्य है—अतः वह खण्डपट महापट के उपादान जो परमाणु उनका ही उपादेय है। अर्थात महापट के उपादान भूत परमाणु के दोनों कार्य हैं—महापट और खण्डपट। वैसे ही प्रकृत में भी पाषाण के उपादान जो पाषाणपरमाणु—उसके कार्य पाषाण–पाषाणभस्म जब कि दोनों हैं तब फिर पाषाणभस्म में गन्ध रहे और पाषाण में न रहे यह कैसे हो सकता है—अतः पाषाण में भी गन्ध अवश्य मानना होगा, रहा कि उसका प्रत्यक्ष नहीं होता है—सो प्रत्यक्ष न होने में कारण है गन्ध की अनुत्कटता, सो यह हम पहिले कह चुके हैं। उपसंहार करते हैं—"इत्थच्च" अर्थात् पाषाण के परमाणु पृथिवी हैं अतः उनसे उत्पन्न पाषाण भी पृथिवी है—तब पाषाण के गन्धवान् होने में कोई बाधक नहीं। "नानारूपेति।" नानारूपवत्त्व" यह भी पृथिवी का लक्षण है। क्योंकि शुक्लनीलादिभेद से सातों प्रकार के रूप पृथिवी ही में रहते हैं। जल तथा तेज में शुक्ल ही रूप रहता है। और पृथिवी में तो एक धर्मी (घटादि) में पाक (अग्निसंयोग) से नानारूप उत्पन्न हो जाते हैं। प्रश्न—जिस पृथिवी (पटादि) में नानारूप उत्पन्न नहीं हुवे उसमें (नानारूपवत्त्व) इस लक्षण की अव्याप्ति हो जायेगी। क्योंकि पटादिरूप पृथिवी में यदि पाक करेंगे तो पट ही जलकर नष्ट हो जावेगा—तो नानारूप पट में उत्पन्न होगा कहाँ से। और नानारूप पाक

---

पाषाणस्य पृथिवीत्वे एव किं मानमित्यतः पृथिवीत्वसाधनायोपक्रमते-अन्यथा = पाषाणे पृथिवीत्वाभावे। **तद्भस्मनि** = पाषाणभस्मनि। पाषाणभस्मनि गन्धः प्रत्यक्षसिद्धः, ततश्च पाषाणभस्मारंभकपरमाणुषु गन्धः स्वीकार्यः। "कारणगुणाः कार्यगुणानारभन्ते" इति न्यायात, ततश्च पाषाणारंभकपरमाणुष्वपि गन्धः स्वीकार्यः, भस्मारंभकपरमाणूनां पाषाणारंभकपरमाणूनां चैक्यात्, तथा च पाषाणपरमाणवः पृथिवीत्ववन्तः गन्धवद्भस्मोपादानत्वादित्यनुमानं फलितम्। ततश्च पृथिवीत्वेन पाषाणपरमाणुषु गन्धवत्त्वसिद्धिः। ततश्च पाषाणं पृथिवी गन्धवद्भस्मोपादानोपादेयत्वादित्यनुमानसहायेन पाषाणं गन्धवत् पृथिवीत्वादित्यनुमानेन पाषाणे गन्धवत्त्वसिद्धिरिति तत्त्वम्। तदेव दर्शयति **भस्मनो हीति**। तथाच पाषाणभस्म पाषाणोपादानोपादेयं पाषाणध्वंसजन्यत्वात् महापटध्वंसजन्यखण्डपटवत्। सामान्यव्याप्तिमाह **यद्द्रव्यमिति**। घटनाशजन्यघटरूपनाशस्य घटोपादानोपादेयत्वविरहेण व्यभिचारवारणाय प्रथमं द्रव्यपदम्। द्वितीयं द्रव्यपदं संपातायातम्। मिथ्याज्ञाननाशजन्यकायव्यूहस्य मिथ्याज्ञानोपादानोपादेयत्वविरहाद् व्यभिचारवारणाय द्वितीयद्रव्यपदम्। वक्ष्यमाणजन्यत्वविशेषस्य तत्राभावेन द्रव्यपदनिवेशे

वाच्यम्, रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य,रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात्, वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात्, न्यायनये घटादावपि तत्सत्त्वाल्लक्षणसमन्वयः।

से ही होता है। उत्तर—नानारूपवत्त्व का "रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्व" अथवा "रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्व" यह जातिघटित अर्थ करने से दोष नहीं। तथाहि—वैशेषिकमतमे रूपद्वयवान् हुवा पृथिवीपरमाणु-और न्यायमत में घट—उसमें वृत्ति जो द्रव्यत्वव्याप्यजाति (पृथिवीत्वजाति) तादृशजातिमान् होगी सम्पूर्णपृथिवी—तो वह भी पृथिवी होगी जिसमें नानारूप उत्पन्न नहीं हुवे। एवं रूपनाशवान् वैशेषिकमत में पृथिवीपरमाणु और न्यायमत में घट उसमें वृत्ति द्रव्यत्वव्याप्यजाति पृथिवीत्वजाति तादृशपृथिवीत्वजातिमान् समस्तपृथिवी हुवी तो वह भी पृथिवी हुवी कि जिसमें अर्थात् पटादिरूपापृथिवी में पाक से रूपनाश नहीं हुवा-अतः जातिघटितलक्षणपृथिवीमात्र में चला गया। वैशेषिकमत में पृथिवीपरमाणुयें—और न्यायमत (गौतममत) में घट में पूर्वरूपनाश-रूपान्तरोत्पत्ति मानते हैं। षड्विध इति-

---

प्रयोजनाभावादिति ध्येयम्। मण्यभावजन्यवह्न्यादौ व्यभिचारवारणाय ध्वंसपदम्। द्रव्यध्वंसत्वावच्छिन्नकारणतानिरूपितकार्यताशालित्वमर्थः। इतरथा प्रतिबन्धकीभूतमणिध्वंसजन्यवह्न्यादेः मण्युपादानोपादेयत्वविरहेण व्यभिचारतादवस्थ्यात्, तत्र मणिसंसर्गाभावत्वेन हेतुत्वात्। न च प्रकृते महापटस्य प्रतिबन्धकतया तत्संसर्गाभावत्वेन हेतुत्वं संभाव्यते इति वाच्यम्। महापटोत्पत्तेः पूर्वमपि तदुत्पादापत्तेर्दुर्वारत्वात्। अदृष्टाऽद्वारा द्रव्यध्वंसजन्यत्वमिह विवक्षणीयम्, तेन शालिग्रामध्वंसजन्यनारकीयशरीरस्य शालिग्रामशिलोपादानोपादेयत्वविरहेपि न व्यभिचारः।

इत्थंचेति। गन्धवद्भस्मोपादानत्वे चेत्यर्थः। तथा च पाषाणपरमाणवः पृथिवीत्ववन्तः गन्धवद्भस्मोपादानत्वादित्यनुमानं फलितम्। तज्जन्यस्य = पाषाणपरमाणुजन्यस्य, गन्धवद्भस्मोपादानोपादेयस्येति यावत्। पृथिवीत्वमिति। तथा च पाषाणं पृथिवी गन्धवद्भस्मोपादानोपादेयत्वादित्यनुमानं बोध्यम्। तस्यापि=पाषाणस्यापि। पाषाणं गन्धवत् पृथिवीत्वादिति गन्धसिद्धिर्बोध्या। वस्तुतस्तु समवायेन गन्धं प्रति स्वाश्रयसमवेतत्वसंबन्धेनाऽवयवगन्धस्य हेतुतया भस्मनि गन्धोपलंभेन पाषाणारंभकेषु गन्धः कल्प्यः, सिद्धे च तत्र गन्धे स्वाश्रयसमवेतत्वलक्षणप्रत्यासत्त्या हेतोर्गन्धस्य सत्त्वात्पाषाणेपि तदुत्पादो दुर्वार एवेति बोध्यम्। रूपद्वयवद्वृत्तीति। रूपद्वयवदवयववृत्तीत्यर्थः। तेनावयविनि रूपद्वयाऽसत्त्वेपि न क्षतिः। पार्थिवपरमाणोः पाकजक्रमिकरूपद्वयवत्तामादायैव पृथिव्यां लक्षणसमन्वयः। अतएव वक्ष्यति 'वैशेषिकनये इति।' रूपनिष्ठं द्वित्वं न संख्यारूपं गुणे गुणानंगीकारात, अपि तु रूपद्वयविषयकापेक्षाबुद्धिविशेषविषयत्वरूपं तन्निवेशनीयमिति गौरवमतो रूपनाशघटितलक्षणमाह रूपनाशवद्वृत्तीति। रूपवद्वृत्तित्वेपि जलत्वतेजस्त्वयोर्न

षड्विध इति। मधुरादिभेदेन यः षड्विधो रसः स पृथिव्यामेव, जले च मधुर एव रसः। अत्रापि पूर्ववद्–'रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं' लक्षणार्थोऽवसेयः॥ गन्धस्त्विति। द्विविध–इति वस्तुस्थितिमात्रं, न तु द्विविधगन्धवत्त्वं लक्षणम् द्विविधत्वस्य व्यर्थत्वात्। द्वैविध्यं च सौरभासौरभभेदेन वोध्यम्॥ ३५॥

स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः।

नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा॥ ३६॥

स्पर्श इति। तस्याः=पृथिव्याः। अनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्त्तत इत्युक्तं पाकज इति। इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तम्। वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणम्, अधिकस्य वैयर्थ्यात्। यद्यपि पाकजस्पर्शः पटादौ नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः॥ नित्येति॥ सा पृथिवी द्विविधा, नित्या अनित्या चेत्यर्थः। अणुलक्षणा=परमाणुरूपा पृथिवी नित्या॥२६॥

मधुर-आम्ल-इत्यादिभेद से जो छः प्रकार का रस वह पृथिवी ही में रहता है। (अतः "षड्विधरसवत्त्व" यह भी पृथिवी का लक्षण हो जाता है। जल में मधुर ही रस है। यहाँ भी पहिले की तरह "रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्व"? यह षड्विधरसवत्त्व का अर्थ कर देना चाहिये। अन्यथा जिस पृथिवी में छः प्रकार का रस उत्पन्न नहीं हुवा-उसमें अव्याप्ति हो जावेगी। "गन्धस्तु द्विविधो मतः" यहाँ पर द्विविधपदवस्तुस्थिति को बतलाता है-अर्थात् गन्ध दो प्रकार का है। द्विविधगन्धवत्त्व यह पृथिवी का लक्षण नहीं है–क्यों कि इस लक्षण में द्विविधपद को वैयर्थ्य है–गन्धवत्त्वमात्र ही लक्षण उचित है। गन्ध सुरभि (सुगन्ध) असुरभि (दुर्गन्ध) इस भेद से दो प्रकार का है। "स्पर्शस्तस्यास्तु" पृथिवी का पाकजअनुष्णाशीतस्पर्श जानना चाहिये। अतः पाकजअनुष्णाशीतस्पर्शवत्त्व यह भी पृथिवी का लक्षण है। प्रश्न–अनुष्णाशीतस्पर्शवत्त्वमात्र ही पृथिवी का लक्षण क्यों नहीं कर दिया। उत्तर-वायु में अतिव्याप्ति हो जावेगी। "पाकज" विशेषण देने से वारण हो गया कि वायु का स्पर्श पाकज नहीं। पृथिवी के ही रूप-रस-गन्ध-स्पर्श ये चार पाकज होते हैं। प्रश्न–"स्पर्शस्तस्यास्तु"

---

रूपनाशवद्वृत्तित्वम्, एवं रूपाभाववद्वृत्तित्वेपि मनस्त्वाऽऽत्मत्वादीनां न रूपनाशवद्वृत्तित्वमिति तत्र तत्र नातिप्रसंगः।

मधुरादीति। आदिना अम्ललवणकटुकषायतिक्तानां संग्रहः। तथा च षड्विधरसवत्त्वं पृथिव्या लक्षणं बोध्यम्। यत्र षड्विधा रसा नोत्पन्नास्तत्राव्याप्तिरत आह अत्रापीति। अवसेय इति। एवं रसनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं

अनित्या तु तदन्या स्यात्सैवावयवयोगिनी ।
सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥

अनित्येति। तदन्या=परमाणुभिन्ना, पृथिवी द्व्यणुकादिरूपा सर्वाऽप्यनित्येत्यर्थः ।

सैव अनित्या पृथिव्येवावयववतीत्यर्थः ॥ नन्ववयविनि किं मानम्, परमाणुपुञ्जैरेवोपपत्तेः । न च परमाणूनामतीन्द्रियत्वाद्घटादेः प्रत्यक्षं न स्यादिति वाच्यम् । एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात्, यथैक-

यह ग्रन्थ क्या पृथिवी लक्षण के अभिप्राय से कहा है-उत्तर-नहीं-किन्तु पृथिवी का स्पर्श अनुष्णाशीत है यह बोधनार्थ कहा है। प्रश्न-पाकजस्पर्शवत्त्व यही पृथिवी का लक्षण क्यों नहीं कर दिया। उत्तर-इस लक्षण की पटादिरूपापृथिवी में अव्याप्ति हो जायगी क्योंकि घट में पाक नहीं होता है यह हम पहिले कह चुके हैं। दूसरा उत्तर यह है कि यदि पाकजस्पर्शवत्त्व आपको लक्षण ही अभीष्ट हो तो पाकजस्पर्शवत्त्व का जातिघटित अर्थ कर देना-"पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्। अर्थात् पाकजस्पर्शवाला हुवा घट-उसमें वृत्ति जो द्रव्यत्वव्याप्यपृथिवीत्वजातितादृशपृथिवीत्वजातिमान् सब पृथिवी हुवी-तो पटादिरूपा पृथिवी भी है-अतः अव्याप्ति नहीं है। "नित्याऽनित्या च सा द्वेधा" पृथिवी दो प्रकार की है-नित्य और अनित्य। परमाणुरूपापृथिवी नित्य है-उससे भिन्न द्व्यणुकादिरूपा सब पृथिवी अनित्य है। और वह अनित्य पृथिवी ही अवयववती ( सावयव ) होती है। बौद्ध शङ्का करता है कि-अवयव से अतिरिक्त अवयवी में क्या प्रमाण? जब कि परमाणुपुञ्ज ( अवयवसमुदाय ) को ही अवयवी मानकर उपपत्ति हो रही है। ( अतः अवयवसमुदाय ही अवयवी है-अवयव से अतिरिक्त अवयवी नहीं है )। प्रश्न-परमाणु अतीन्द्रिय ( प्रत्यक्षायोग्य ) हैं-परमाणुसमुदाय ही यदि घट मान लिया जायगा तो घट का भी प्रत्यक्ष नहीं होगा। उत्तर-एक परमाणु प्रत्यक्षायोग्य होने पर भी परमाणुसमुदायभूतघटको प्रत्यक्षयोग्य मान लिया जायगा-अनुभवबलात्। जैसे एक केश दूर से प्रत्यक्षायोग्य होने पर भी केशसमूह का प्रत्यक्ष होता है। प्रश्न-"एको घटः स्थूलः" यह स्थौल्यबुद्धि घट में अनुपपन्न हो जायेगी ( क्योंकि परमाणु में स्थौल्य नहीं है-अन्यथा परमाणु का प्रत्यक्ष होना चाहिये-अतः परमाणुसमुदायभूत घट में भी स्थौल्यबुद्धि नहीं बनेगी।

---

लक्षणं बोध्यम्। व्यर्थत्वादिति। अव्याप्तेश्चेत्यपि बोध्यम्। वस्तुतोऽव्याप्तिदूषणस्य प्रागिव गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य लक्षणकरणे परिहारसंभवे विवक्षाऽविवक्षासाधारण्येन दूषणमाह व्यर्थत्वादिति ।

बौद्धः शंकते नन्विति। किं मानमिति। न किमपि मानमित्यर्थः। अथ अयं घटः इति प्रतीतिरेव मानमित्यत आह परमाणुपुञ्जैरेवेति। परमाणुभिरेवेत्यर्थः। न च अयं घट इति प्रतीतेः परमाणुपुञ्जविषयकत्वे मृत्पिण्डेऽपि अयं

स्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम् । न चैको घटः स्थूल इति बुद्धेरनुपपत्तिरिति वाच्यम् । एको महान्धान्यराशिरिति वदुपपत्तेः ।

नैवम्, परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षत्वाऽयोगात् । दूरस्थकेशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात् । न च तदानीमदृश्यपरमाणुपुञ्जाद् दृश्यपरमाणुपुञ्जस्योत्पन्नत्वान्न प्रत्यक्षत्वे विरोध इति वाच्यम् । अदृश्यस्य दृश्यानुपादानत्वात्, अन्यथा चक्षुरूष्मादिसंततेरपि कदाचिद् दृश्यत्वप्रसङ्गात् । न चातितप्ततैलादौ कथमदृश्यदहनसंततेर्दृश्यदह-

उत्तर—प्रत्येक धान्य में महत्व (स्थौल्य) बुद्धि न होने पर भी धान्यराशि में जैसे स्थौल्यबुद्धि होती है। कि यह एक महान् धान्यराशि है वैसे ही प्रत्येक परमाणु में) स्थौल्यबुद्धि न होने पर भी परमाणुसमुदायभूतघट में स्थौल्यबुद्धि हो जावेगी। नैयायिक बोलता है—नैवम्—यह ठीक नहीं—जब कि परमाणु प्रत्यक्षायोग्य हैं तो तत्समूह (परमाणुपुञ्ज) जो घट उसका भी प्रत्यक्ष नहीं होगा। (अतः अवयव से अतिरिक्त अवयवी मानना पड़ेगा—दूरस्थकेशवाला दृष्टान्त ठीक नहीं है) क्यों कि दूरस्थकेश अतीन्द्रिय नहीं है—समीप में उसका प्रत्यक्ष होता है। प्रश्न-अदृश्यपरमाणुपुञ्ज से दृश्यपरमाणुपुञ्ज (घटात्मक)

---

घट इति प्रतीत्यापत्तिः । विलक्षणसंयोगविशिष्टैः परमाणुभिरेव अयं घट इति प्रतीत्युपपत्तेरिति समुदितार्थात्, तथाच घट इति प्रतीतिविषयस्य परमाणुपुञ्जात्मकतया परमाणुषु द्रव्यसमवायाभाव इति भावः । **न स्यादिति** । तथा च परमाणवो घट इति प्रतीतिविषयत्वाभाववन्तः अतीन्द्रियत्वादिति भावः । **तत्समूहस्य**=परमाणुसमूहस्य । तत्र दृष्टान्तमाह । **यथेति** । **तत्समूहस्य**=केशसमूहस्य । **प्रत्यक्षत्वं**=साक्षात्कारविषयत्वम्, परमाणुसमूहो नातीन्द्रियः समुदायत्वात् दूरस्थकेशसमूहवदित्यनुमानेन पूर्वानुमाने स्वरूपासिद्धिरिति भावः । **अनुपपत्तिरिति** । परमाणूनामनेकत्वादणुत्वाच्चेति भावः । **उपपत्तेरिति** । यथा धान्यसमूहस्यैकत्वादेक इति प्रतीतिः, एवं एकधान्यसंयुक्तापरधान्यसंयुक्तान्यधान्यसंयोगस्यैव महत्त्वात्मकतया महानिति प्रतीतिस्तथा परमाणुपुंजेष्वपीति भावः ।

अथाऽस्मन्मते धान्यराशेस्तावद् धान्यानन्तसंयोगात्मकस्य सामानाधिकरण्येन महत्त्वैकत्वयोर्वर्तमानतया "एको महानिति" प्रतीत्युपपत्तिः, परमाणुपुञ्जात्मकत्वनये तु स्थौल्याऽप्रसिद्धया प्रतीतेर्भ्रमात्मकत्वमपि न संभावनाविषय इति चेत् ।

सत्यम् । न वयं स्थूल इति प्रतीतेर्गौणत्वमाचक्षामः, किन्तु स्थूलत्वं फलबलात्तन्निष्ठ एव जातिविशेषः, भवन्नये परिमाणनिष्ठ इवाऽस्मन्मतेपि तथात्वे बाध-

नोत्पत्तिरिति वाच्यम् । तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात् । न चादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यम् । यतो न दृश्यत्वमदृश्यत्वं वा कस्यचित्स्वभावादाचक्ष्महे, किन्तु महत्त्वोद्भूतरूपादिकारणसमुदायवशाद् दृश्यत्वं, तदभावे चादृश्यत्वम् । तथा च त्रसरेणोर्महत्त्वात्प्रत्यक्षत्वं न तु द्व्यणुकादेस्तदभावात्, न हि त्वन्मतेऽपि सम्भवतीदं, परमाणौ महत्त्वाभावात् ।

की उत्पत्ति होती है अतः घट के प्रत्यक्ष होने में कोई बाधा नहीं है। उत्तर-अदृश्य वस्तु दृश्यवस्तु का उपादान (कारण) नहीं हो सकता है। अन्यथा (अदृश्य को दृश्य का उपादान मानेंगे तो) कदाचित् चक्षुः तथा ऊष्मा आदि अदृश्य तेजःपदार्थों का भी प्रत्यक्ष होना चाहिये–अर्थात् अदृश्य चक्षु से कदाचित दृश्य चक्षु की-एवं अदृश्य ऊष्मा से दृश्य ऊष्मा की उत्पत्ति होनी चाहिये। प्रश्न-बौद्ध नैयायिक से कहता है-कि कढ़ाई में अतितप्ततैल में वर्त्तमान अदृश्य अग्नि से कभी-कभी ज्वालारूपी दृश्य-अग्नि की जैसे उत्पत्ति देखी जाती है-ऐसे ही प्रकृत में भी अदृश्यपरमाणुपुञ्ज से एक दृश्यपरमाणुपुञ्ज घट भी उत्पन्न होता है। उत्तर–नैयायिक अतितप्ततैल के अन्दर विद्यमान जो अग्नि के सूक्ष्मावयव वे दृश्य ही हैं–उन्हीं से ज्वालारूपी स्थूल दहन की उत्पत्ति होती है। अतः पूर्वस्थल में दृश्य से ही दृश्य की उत्पत्ति होती है। प्रश्न–बौद्ध० अदृश्य द्व्यणुक से दृश्यत्रसरेणु की उत्पत्ति कैसे आपके यहाँ होती है। उत्तर-नैया० महत्त्व-उद्भूतरूप आदि कारणसमुदायवान् दृश्य कहलाता है–और तादृशसमुदाय के अभाव वाले को अदृश्य कहते हैं। त्रसरेणु में महत्त्व होने से उसका प्रत्यक्ष होता है–द्व्यणुक में महत्त्व न होने से उसका प्रत्यक्ष नहीं होता है। (दृश्यत्व-अदृश्यत्व किसी वस्तु के स्वाभाविकधर्म नहीं है–किन्तु जहाँ महत्त्व आदि कारणसमुदाय है वह दृश्य है-जहाँ नहीं है वह अदृश्य है) प्रश्न–प्रत्येक परमाणु अदृश्य हो-परन्तु परमाणुपुञ्ज घट को दृश्य मान लिया जाय। उत्तर–"नहि त्वन्मतेऽपि" अर्थात् तुम्हारे (बौद्ध) मत में भी परमाणु में दृश्यत्वोपपादन सम्भव नहीं क्योंकि परमाणु में महत्त्व नहीं है। (तब फिर लाख परमाणु क्यों न हों उनमें महत्त्व कहाँ से आजावेगा-अतः बौद्ध का जो यह कहना है कि प्रत्येक परमाणु का प्रत्यक्ष न हो–पुञ्जस्वरूप घट का प्रत्यक्ष हो जावेगा–सो यह कहना सर्वथा व्यर्थ है-क्योंकि वह पुञ्ज भी तो परमाणुवों से अतिरिक्त नहीं है–अतः परमाणुओं से द्व्यणुकादि द्वारा उत्पाद्यमान एक घटादि रूप अवयवी अतिरिक्त मानना चाहिये–इससे अतिरिक्त अवयवी की सिद्धि हो गयी।

---

काभावात् । तत्समूहस्यापि = परमाणुसमूहस्यापि । प्रत्यक्षत्वायोगादिति । परमाणुरूपादेर्विषयतया चाक्षुषापत्तिवारणाय द्रव्यसमवेतवृत्तिविषयतया चाक्षुषे स्वाश्रयसमवेतत्वसंबन्धेन महत्त्वस्य हेतुतायाः क्लृप्तत्वेन तथाविधपुञ्जात्मकस्य घटस्य प्रत्यक्षाऽसंभवादिति भावः । स्वभावतोऽयोग्यानां परमाणूनां परस्पर-

इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम् । तेषां चावयवावयवधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः ।

इस प्रकार अवयवी की सिद्धि हो जाने पर अवयवों के उत्पाद-विनाश प्रयुक्त अवयवी का उत्पाद विनाश प्रत्यक्ष सिद्ध होने से अवयवी को अनित्यत्व स्पष्ट सिद्ध है । उन अवयवियों की अवयवावयव धारा के अनन्त मानने पर ( अर्थात् उनके अवयव-फिर उन अवयवों के भी अवयव फिर उनके भी-इसी प्रकार यह अवयवधारा बिना कहीं समाप्त हुवे यदि बराबर

---

संयोगमात्रेण योग्यत्वं न संभवतीति मन्तव्यम् । त्वदुक्तदृष्टान्तस्य वैधर्म्यमित्याह **दूरस्थकेशस्यवेति** । **तस्यैव** = दूरस्थकेशस्यैव । एवकारस्य सन्निधाने इत्यनेनाऽन्वयः । तथाच सन्निधानत एव तस्य प्रत्यक्षत्वादित्यर्थः । तथाच दूरत्वं प्रतिबन्धकं नातः प्रत्यक्षं तस्य, न तु स्वाभाविकमप्रत्यक्षत्वं तस्येति भावः । तथा च त्वदुक्तानुमाने बाध इति भावः । **उत्पन्नत्वादिति** । क्षणभङ्गवादिनां मते परमाणूनामुत्पत्तिस्वीकारादिति भावः, तथाच परमाणुपुञ्जो नातीन्द्रियः दृश्यत्वादित्यनुमानं फलितम् । एवं च नोक्तबाध इति ध्येयम् । **अन्यथा** = अदृश्यस्य दृश्योत्पादकत्वे । **दृश्यत्वप्रसंगादिति** । एवं च स्वरूपासिद्धिरिति भावः । **तत्र** = तादृशदहनोत्पत्तिस्थले । **तदन्तःपातिभिः** = अतितप्ततैलान्तःपातिभिः । **स्वभावात्** = कारणनैरपेक्ष्यात् । **उद्भूतरूपादीति** आलोकादिपरिग्रहः । **तदभावे** = तादृशकारणसमुदायाभावे । **तदभावात्** = महत्त्वाद्यभावात् । **त्वन्मते** = परमाणुपुञ्जात्मकत्वमते । **इदं** = दृश्यत्वम् । इदमत्रावधेयम् । सामान्यतो लौकिकप्रत्यक्षमात्रे लौकिकविषयताया हेतुत्वस्य, विशिष्य तत्तद्व्यक्तित्वेन वा हेतुत्वस्य क्लृप्ततया तादृशहेत्वभावादेव परमाणोः प्रत्यक्षवारणसंभवः, तादृशपुञ्जात्मकस्य घटस्य तु फलबलाल्लौकिकविषयत्वकल्पनात् , विशिष्य कार्यकारणभावकल्पनाद्वा प्रत्यक्षोपपत्तेः । न च फलबलाल्लौकिकविषयताया नानापरमाणुसंयोगलक्षणपुंजवृत्तित्वे प्रत्येकपरमाणुद्वयसंयोगवृत्तित्वमपि स्वीकरणीयम्, अन्यथा प्रत्येकावृत्तिधर्मस्य समुदायाऽवृत्तित्वेन तादृशविषयताकल्पना कुकल्पनैव स्यात् , तथाच परमाणोः प्रत्यक्षं दुर्वारमिति वाच्यम् । घटपटोभयवृत्तिद्वित्ववत् तादृशसंयोगलक्षणपुञ्जे लौकिकविषयतायाः व्यासज्यवृत्तित्वोपगमेन तद्वारणसंभवादिति पुञ्जवादिमतमेव साधीयः । न च परमाणुपुञ्जेषु घटत्वांगीकारे कपालाद् घट इति प्रतीत्यनुपपत्तिः, परमाणूनां कपालजन्यत्वाभावादिति वाच्यम् । तन्मते कपालस्यापि परमाणुपुञ्जतया घटात्मक परमाणुपुञ्जेषु कपालात्मकपरमाणुपुञ्जजन्यत्वस्वीकारात् । "पुञ्जात्पुञ्जोत्पत्तिरि"-ति तत्सिद्धान्तादिति दिक् । **इत्थं च** = परमाणूनामदृश्यत्वे च । **अवयविसिद्धौ** = अतिरिक्तावयविसिद्धौ । घटादिपदवाच्यत्वस्य नानातादृशसंयोगेषु कल्पनायां गौरवादिति भावः । **तेषां** = अवयविनाम् ।

**तेषां चेति** । अवयविनां चेत्यर्थः । अनन्तत्वे = समवेतद्रव्यत्वस्य

**अतः क्वचिद्विश्रामो वाच्यः, यत्र तु विश्रामस्तस्याऽनित्यत्वेऽसमवेतभावकार्योत्पत्तिप्रसङ्ग इति तस्य नित्यत्वम्। महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः, न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यम्। 'त्रसरेणुः सावयवः**

चलती ही रहेगी तो सुमेरु और सरसों इन दोनों में समानता हो जावेगी-क्योंकि अवयवों की न्यूनाधिक्यता प्रयुक्त ही अवयवियों में वैषम्य आता है-और यदि अवयवी मात्र ही अनन्तावयव हो गये तो वैषम्य का प्रयोजक कोई रहा ही नहीं-अतः मेरु सर्षप में साम्य प्रसङ्ग हो जावेगा। अतः कहीं पर अवयवधारा का विश्राम अवश्य करना चाहिये। और जहाँ विश्राम करेंगे उसे यदि अनित्य मानेंगे तो असमवेतभावकार्योत्पत्ति की आपत्ति लग जावेगी। ( अभिप्राय यह है कि जितना भी भावकार्य है वह सब अपने अवयवों में समवाय सम्बन्ध से उत्पन्न होता है-जैसे-घट-भावकार्य है-वह अपने अवयव कपाल में समवाय सम्बन्ध से उत्पन्न होता है इसे समवेतभावकार्योत्पत्ति कहते हैं। यह उत्पत्ति तो अनुभव सिद्ध है-क्योंकि भावकार्यमात्र ही अपने अवयव में समवेत होकर उत्पन्न होता है ऐसा घट-पट-आदि भावकार्य देखा गया है। इस प्रकार जहाँ अवयवधारा की समाप्ति करेंगे-वही अन्तिम अवयव माना जायगा, वह अन्तिम अवयव होने के नाते असमवेत हुआ-क्योंकि यदि उसका भी कोई अवयव होता, तब उसमें वह समवेत होता। अब यदि उसे अनित्य मानेंगे तो वह भी अनित्य होने के नाते घट-पट-आदि की तरह भावकार्य हुवा-अतः असमवेत भावकार्य की उत्पत्ति की आपत्ति लग गयी वस्तुतः असमवेतभावकार्योत्पत्ति सर्वथा असम्भव है।

वही मूल में कहा है कि "यत्र च विश्रामस्तस्यानित्यत्वे" इत्यादि। अतः उस अन्तिम अवयव को नित्य ही मानना चाहिये। महत्परिमाण के तारतम्य की विश्रान्ति जैसे गगन आदि में हो जाती है, ( कि गगन आदि से बड़ा परिमाण किसी का नहीं-क्योंकि गगन आदि का परममहत्परिमाण है ) वैसे ही अणुपरिमाण के तारतम्य की भी विश्रान्ति कहीं अवश्य करनी चाहिये ( कि अमुकवस्तु से छोटा परिमाण किसी वस्तु का नहीं हैं ) सो जहाँ अणुपरिमाण के

---

समवेतद्रव्यजन्यत्वव्याप्यत्वे। **मेरुसर्षपयोरपीति**। अपिः साम्यप्रसंग इत्युत्तरं योजनीयः। साम्यं च परिमाणतारतम्याभावः, तथाच मेरुसर्षपयोः परिमाणतारतम्याभावप्रसंगोपीत्यर्थः। तेन द्व्यणुकस्य सावयवद्रव्यारब्धत्वे महत्त्वापत्तिश्च समुच्चिता, तथाच समवेतद्रव्यं "मेरुः" यदि समवेतद्रव्यजन्यं स्यात्तदा सर्षपपरिमाणतुल्यपरिमाणवत्स्यादित्यापत्तिर्बोध्या। समवेतद्रव्यत्वावच्छेदेन समवेतद्रव्यजन्यत्वमापादनीयम्। द्व्यणुकं यदि समवेतद्रव्यजन्यं महत्त्ववत्स्यादित्यपि बोध्यम्। वस्तुतोऽवयवधाराया अनन्तत्वेपि तादृशानन्तावयवारब्धानां त्रसरेणूनामेव साम्यं युक्तम्, मेरुसर्षपयोस्तु आरम्भकत्रसरेणूनामेव संख्यातारतम्येन परिमाणतारतम्यमुपपद्यते न मेरौ सर्षपसमानतापत्तिरित्यन्यत्र विस्तरः। ननु यत्र विश्रामस्तस्य नित्यत्वे किं मानमत आह यत्र त्विति। **असमवेतेति**। "यद्भावकार्यं तत्तत्समवेतमिति व्याप्तेः"। ननु तस्य नित्यत्वसिद्धावपि अणुत्वे किं मानमिति चेत्।

चाक्षुषद्रव्यत्वात्, घटवदित्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः। न चेदमप्रयोजकम्, अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यवत्त्वस्य प्रयोजकत्वात्। न चैवं क्रमेण तदवयवधाराऽपि सिद्ध्येदिति वाच्यम्। अनवस्थाभयेन तदसिद्धेरिति। सा चेति। सा कार्यरूपा पृथिवी त्रिधेत्यर्थः। शरीरेन्द्रियविषयभेदादित्यर्थः॥ ३६॥ ३७॥

तारतम्य की विश्रान्ति है वही परमाणु है। प्रश्न–अणुपरिमाण की विश्रान्ति त्रसरेणु पर ही मान ली जाय। उत्तर-नहीं-त्रसरेणु-सावयव है–चाक्षुष द्रव्य होने के कारण–घट की तरह, इस अनुमान से त्रसरेणु के अवयव द्व्यणुक की सिद्धि हो गयी। प्रश्न–अच्छा–त्रसरेणु के अवयव द्व्यणुक पर ही अणुपरिमाण के तारतम्य की विश्रान्ति कर दी जाय। उत्तर–त्रसरेणु का अवयव भी सावयव है–महत का आरम्भक ( उत्पादक ) होने से कपाल की तरह। ( जैसे कपाल अपने से महान् जो घट उसका उत्पादक होने से सावयव अर्थात् कपालिका उसका अवयव है–इस अनुमान से परमाणु की सिद्धि हो गयी ) प्रश्न–"नचेदमप्रयोजकम्" अर्थात् "त्रसरेणुः सावयवः" यह अनुमान अप्रयोजक है–( व्यभिचारशङ्कानिवर्त्तक तर्कशून्य अनुमान को अप्रयोजक अनुमान कहते हैं ) प्रश्न–पूर्वोक्त अनुमान की तरह हम यह भी अनुमान करेंगे कि त्रसरेणु के अवयव का अवयव भी सावयव है इससे परमाणु की भी अवयवधारा सिद्ध हो जायगी। उत्तर-अनवस्था के भय से वह अवयवधारा असिद्ध है। वह पृथिवी तीन प्रकार की है—शरीर—इन्द्रिय—विषय भेद से॥ ३७॥

---

अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् महापरिमाणतारतम्यवदित्यनुमानस्य प्रमाणत्वात्, तदेतदाह **महत्परिमाणेति**। **विश्रामोस्त्विति**। अणुपरिमाणतारतम्यस्येति शेषः। आत्मनि व्यभिचारवारणाय चाक्षुषेति। अभावे व्यभिचारवारणाय द्रव्यत्वेति। **तदवयसिद्धौ**=त्रसरेण्ववयवसिद्धौ। **तदवयवसिद्धेरिति**। द्व्यणुकावयवसिद्धेरित्यर्थः। परमाणुसिद्धेरिति यावत। **अप्रयोजकमिति**। महदारम्भकत्वमस्तु सावयवत्वं मास्तु इति व्यभिचारशङ्कानिवर्तकतर्करहितमित्यर्थः। **अनेकद्रव्यवत्त्वस्येति**। स्वसमवेतसमवेतत्वसंबन्धेन नानाद्रव्यवत्त्वस्येत्यर्थः। **प्रयोजकत्वादिति**। त्रसरेणुर्यदि सावयवारब्धो "उक्तसंबन्धेन नानाद्रव्यवान्" न स्यात्तदा महान्न स्यादिति तर्कस्य प्रयोजकत्वादित्यर्थः। **एवं क्रमेण** = महदारंभारंभकत्वहेतुना। **तदवयवधारापि** = परमाण्ववयवधारापि। **तदसिद्धेः** = अवयवधाराया असिद्धेरित्यर्थः।

नव्यास्तु परमाणुद्व्यणुकयोर्मानाभावः। न चोक्तानुमानं तत्साधकम्, अप्रयोजकत्वात्। न चाऽपकृष्टपरिमाणोत्पादानुपपत्तिः, तत्परिमाणव्यक्तेर्लाघवेन

योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम् ।
विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥३८॥

तत्र देहमुदाहरति-योनिजमयोनिजं चेत्यर्थः । योनिजमपि द्विविधं-जरायुजमण्डजं च । जरायुजं मानुषादीनाम् । अण्डजं सर्पादीनाम् । अयोनिजं-स्वेदजोद्भिज्जादिकम् । स्वेदजाः=कृमिदंशाद्याः । उद्भिज्जास्तरुगुल्माद्याः । नारकिणां शरीरमप्ययोनिजम् । न च मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम् । गन्धादिमत्त्वस्यैव प्रमाणत्वात् । न च क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यम् । तथा सति जलत्वपृथिवीत्वादिना

"योनिजादि भवेद्देहम्" योनिज—अयोनिज—दो प्रकार का शरीर है। योनिज शरीर भी दो प्रकार का है – जरायुज—अण्डज, मनुष्य आदि का शरीर जरायुज होता है ( जिस चर्मपुटक में गर्भ लिपटा रहता है उस चर्मपुटक को जरायु कहते हैं ) सर्प आदि का शरीर अण्डज होता है। स्वेद से जायमान जो शरीर—एवं ऊपर को भेदन करके जायमान जो शरीर वह अयोनिज शरीर कहलाता है— जैसे कृमि ( कीट ) शरीर—दंश ( मच्छर ) शरीर-स्वेदज शरीर कहलाता है। और तरु ( वृक्ष ) शरीर-गुल्म ( खजूर आदि ) शरीर उद्भिज्ज शरीर कहलाता है। नारकिओं का शरीर भी अयोनिज ही है। प्रश्न—मनुष्य आदि का शरीर पार्थिव है इसमें क्या प्रमाण है। उत्तर—गन्धादिमत्त्व ही प्रमाण है। प्रश्न—मनुष्य शरीर को क्लेद—एवं ऊष्मा के भी उपलंभ प्रत्यक्ष होने से जलीय-तैजस-आदिपद से वायवीय-आकाशीय ही क्यों न माना जाय। उत्तर—जलत्व-पृथिवीत्व आदि के साथ सांकर्य

---

नित्यत्वाभ्युपगमात् । अणुव्यवहारस्तु अपकृष्टपरिमाणनिबन्धनः, महत्त्वेऽपि महत्तरादणुव्यवहारादित्याहुः । यत्तु परमाणुद्व्यणुकयोरनभ्युपगमे त्रुटिप्रत्यक्षाय चक्षुःसंयोगस्य हेतुत्वकल्पनमावश्यकम्, अन्यथा तु चक्षुःसंयुक्तसमवेतसमवायेनैव रूपत्वप्रत्यक्षानुरोधेन क्लृप्तहेतुताकेन निर्वाहात् । एवं संयुक्तसमवायहेतुतायामपि प्रयोजनाभाव इति । तन्न । परमाण्वादिघटितसन्निकर्षात्पृथिवीत्वे प्रत्यक्षवारणाय संयुक्तांशे महत्त्वनिवेश आवश्यकः, इत्थं च त्रुटेस्तद्रूपस्य च प्रत्यक्षोपपत्तये चक्षुःसंयोग-चक्षुःसंयुक्तसमवाययोर्हेतुत्वमावश्यकमेवेत्यधिकं सन्निकर्षवादे विचारयिष्यामः ॥ ३६, ३७ ॥

शुक्रशोणितयोः परस्परसंमेलनजन्यं योनिजम् । तद्भिन्नमयोनिजम्, गर्भवेष्टनचर्मपुटकं जरायुः । कृमिदंशाद्या इति । तच्छरीरोत्पत्तेर्धर्मविशेषसहितेभ्योऽणुभ्य एव स्वीकारादिति भावः । गन्धादिमत्त्वस्यैवेति । आदिना नीलादिरूपपरिग्रहः । तथाच मानुषादिशरीरं पृथिवी गन्धवत्त्वादित्यनुमानं बोध्यम् । क्लेदः=स्वेदः । ऊष्मा=औष्ण्यम् । तेन=शरीरस्य पृथिवीत्वसाधनेन ।

संकरप्रसङ्गात्। न च तर्हि जलीयत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यम्। क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानात्, गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः। तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम्। शरीरत्वं तु न जातिः, पृथिवीत्वादिना साङ्कर्यात्, किन्तु चेष्टाश्रयत्वम्। वृक्षादीनामपि चेष्टासत्त्वान्नाव्याप्तिः। न च वृक्षादेः शरीरत्वे किं मानमिति वाच्यम्। आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात्। तत्रैव किंमानमिति चेद्? भग्नक्षतसंरोहणादिना तदुन्नयनात्। यदि हस्तादौ शरीरव्यवहारो न भवति तदाऽन्त्यावयवित्वेन विशेषणीयम्। न च यत्र शरीरे चेष्टा न जाता तत्रा-

हो जावेगा। ( जैसे पृथिवीत्वाभाववान् हुवा जल उसमें जलत्व है—जलत्वाभाववान् हुवा घट उसमें पृथिवीत्व है—दोनों का समावेश मनुष्य शरीर में है. प्रश्न—मनुष्य शरीर को जलीय ही मान लिया जाय, पार्थिव न माना जाय ( उत्तर—ऐसा नहीं क्लेदादि का विनाश होने पर भी ( यह वही शरीर है ) इस प्रकार शरीरत्वेन प्रत्यभिज्ञा होती है—तथा गन्ध आदि का उपलम्भ होता है अतः मनुष्य शरीर को पृथिवीत्व सिद्ध है। इस कारण से पार्थिव आदि शरीर में जलादि को निमित्तमात्र ही जानना। प्रश्न—( क्या शरीरत्व जाति है ) उत्तर—( शरीर चेष्टाश्रय है ) और शरीरत्व चेष्टाश्रयत्वरूप है। वृक्षादिशरीर में चेष्टा है—( अतः वे भी चेष्टाश्रय हैं ) उनमें अव्याप्ति नहीं हैं। प्रश्न—वृक्षादि का शरीर होता है इसमें क्या प्रमाण है—उत्तर—आध्यात्मिकवायु ( प्राणवायु ) का सम्बन्ध ही प्रमाण है ( प्राणवायु का नियम है कि उसका सम्बन्ध शरीर से ही होता है।

प्रश्न—इसी में क्या प्रमाण है कि ( वृक्षादिशरीर से प्राणवायु का सम्बन्ध है )। उत्तर—वृक्ष के किसी अवयव के भग्न एवं क्षत होने पर भी उस अवयव का पुनः संरोहण ( संवर्धन ) होता है—इससे वृक्षशरीर में आध्यात्मिकवायु के सम्बन्ध का अनुमान करते हैं। ( क्योंकि उसी शरीर के अवयव का भङ्ग होने पर सम्वर्धन देखा जाता है—जिस शरीर में प्राणवायु का सम्बन्ध होता है ) प्रश्न—"चेष्टाश्रयत्व" लक्षण की हस्तादि में अव्याप्ति है—क्योंकि हस्तादि भी चेष्टाश्रय हैं। उत्तर—यदि हस्तादि में शरीर व्यवहार न होता हो तो शरीर के लक्षण में अन्त्यावयवित्व विशेषण दे देना। ( अर्थात् अन्त्यावयवित्वे सति चेष्टाश्रयत्वं शरीरत्वम्" यह ही लक्षण कर देना।

इससे हस्तादि में अव्याप्ति नहीं है—क्योंकि हस्तादि में चेष्टाश्रयत्व है—परन्तु अन्त्यावयवित्व नहीं है। अन्त्यावयवित्वविशिष्ट चेष्टाश्रयत्व शरीर ही में है—क्योंकि शरीर ही अन्त्यावयवी है—हस्तादि अन्त्यावयवी नहीं।

---

पृथिवीत्वादिना सांकर्यादिति। पृथिवीत्वं विहाय शरीरत्वं जलशरीरे, शरीरत्वं विहाय पृथिवीत्वं घटे उभयोः समावेशो मानुषशरीरे इत्यर्थः। चेष्टा च हिताहितप्राप्तिपरिहारार्था क्रिया, नतु क्रियामात्रं घटादावपि सत्त्वात्।

व्याप्तिरिति वाच्यम्। तादृशे प्रमाणाभावात्। अथवा चेष्टावदन्त्यावयविवृत्ति-द्रव्यत्वव्याप्यजातिमत्त्वम्, अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वा तत्। मानुषत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः। न च नृसिंहशरीरे कथं लक्षण-समन्वयः, तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावाज्जलीयतैजसशरीर-वृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यं, कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात्। इन्द्रियमिति। घ्राणेन्द्रियं पार्थि-वमित्यर्थः। पार्थिवत्वं कथमिति चेत्? इत्थम् घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्, कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत्। न च दृष्टान्ते

प्रश्न—जिस शरीर में चेष्टा नहीं हुवी— उसमें अव्याप्ति हो जायेगी। उत्तर— ऐसे शरीर में प्रमाण नहीं। प्रश्न—जिस शरीर में चेष्टा नहीं ऐसा मृत शरीर प्रमाण है। उत्तर—तब ऐसी स्थिति में शरीरत्व का जातिघटित लक्षण कर देना—अर्थात् चेष्टावान् जो अन्त्यावयवी उसमें वृत्ति जो द्रव्यत्व व्याप्यजाति (मानुषत्वचैत्रत्व जाति-तादृशजातिमत्त्व चैत्रीय-मृत शरीर में भी है। एवं अन्त्यावयवी मात्र में वृत्ति अथ च चेष्टावत् में वृत्ति जो जाति मानुषत्व-चैत्रत्व जाति-तादृशजातिमत्व मृत शरीर में भी है-अतः मानुषत्व चैत्रत्व जाति को लेकर शरीरमात्र में लक्षण समन्वय कर लेना। प्रश्न—नृसिंह शरीर में कैसे लक्षण समन्वय होगा। क्योंकि नृसिंहत्व एक व्यक्ति मात्रवृत्ति होने से जाति नहीं है, यदि देवत्वजाति को लेकर लक्षण समन्वय करें तो जलीय शरीरवान् जो वरुण-तैजस शरीरवान् जो सूर्य उसमें देवत्ववृत्ति होने से सांकर्य हो जाता है-अतः देवत्व भी जाति नहीं है। उत्तर—कल्पभेद से नृसिंहशरीर नाना हैं अतः नृसिंहत्वजाति को लेकर नृसिंह शरीर में लक्षण समन्वय हो जावेगा। इन्द्रियमिति। घ्राणेन्द्रिय पार्थिव है। प्रश्न— पार्थिव कैसे है। उत्तर—घ्राणनामक इन्द्रिय पार्थिव है यह अनुमान प्रमाण से सिद्ध होता है, कि घ्राणेन्द्रिय पार्थिव है रूप आदि के मध्य में गन्ध का ही अभिव्यंजक (प्रत्यक्षजनक) होने से, कुंकुम केसर के गन्ध का अभिव्यंजक जैसे गोघृत होता

---

आध्यात्मिकवायुः प्राणः। **तत्रैव** = आध्यात्मिकवायुसंबन्धे एव। **भग्नक्षतसंरोहणादिना,** आदिना वृद्धिपरिग्रहः। **तदुन्नयनात्** = आध्यात्मिकवायुसंबन्धानुमानात्। अन्त्यावयवित्वं च द्रव्यत्वे सति द्रव्यानारंभकत्वम्, प्रकृते तु विशेष्यदलमेव निविष्टं न त्वधिकं गौरवात्।

**अथवेति।** घटत्वादिजातिव्युदासाय **चेष्टावदिति।** हस्तत्वादिव्युदासायाऽन्त्यावयविवृत्तीति। सत्तावारणाय **द्रव्यत्वव्याप्येति।** व्याप्यत्वं च न्यूनवृत्तित्वरूपं निवेश्यम्। पृथिवीत्वरूपतादृशजातिमति घटादावतिव्याप्तिवारणाय लक्षणान्तरमाह **अन्त्यावयविमात्रवृत्तीति।** अनेन पृथिवीत्वजातिव्युदासः। **चेष्टावद्वृत्तीत्यनेन** घटत्वादिव्युदासः। ननु शरीरत्वस्य जातित्वाभावे कां जाति-

स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं, परकीयरूपाद्यव्यञ्जकत्वस्यतदर्थत्वात् । न चैवं नवशरावगन्धव्यंजकजलेऽनैकान्तिकत्वमिति वाच्यं, तस्य सक्तुरसाभिव्यञ्जकत्वात् । यद्वा परकीयेति न देयं, वायूपनीतसुरभिभागस्य दृष्टान्तत्वसंभवात् । न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यं, द्रव्यत्वे सतीति विशेषणात् । विषय इति । उपभोगसाधनं विषयः । सर्वमेव हि कार्यजातमदृष्टाधीनम्, यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परंपरया वा जनयत्येव, न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति । तेन द्व्यणुकादि ब्रह्माण्डान्तं सर्वमेव विषयो भवति । शरीरेन्द्रिययोर्विषयित्वेऽपि प्रकारान्तरेणोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥३८॥

है। प्रश्न—दृष्टान्त में गोघृत अपने रूप का भी व्यंजक होने से "गन्धस्यैवाभिव्यंजकत्वात्" यह हेतु नहीं रहा, अतः दृष्टान्तासिद्धि ही जायेगी । उत्तर परकीयरूपाद्यव्यंजकत्व यह हेतु का अर्थ कर देना—अर्थात् परकीय रूपादि का अव्यंजक होता हुवा जो गन्ध का ही व्यंजक होता है—वह पृथिवी ही होता है सो गोघृत वैसा है ।

प्रश्न—नये मिट्टी के वर्त्तन के गन्धमात्र के अभिव्यंजक जल में यह हेतु चला गया और वहाँ साध्य (पृथिवीत्व) नहीं है—अतः व्यभिचार हो गया । उत्तर—ऐसा नहीं—उसी जल में सक्तु यदि डाल दिया जाय तो वह जल सत्तू के रस का भी अभिव्यंजक हो जाता है तो उस जल में "गन्धस्यैव अभिव्यंजकत्वात्" यह हेतु न रहने से व्यभिचार नहीं हुवा । अथवा "परकीयरूपाद्यव्यंजकत्व" यहाँ परकीय पद न देना—अथ च दृष्टान्त वायूपनीत सुरभि भाग को बना देना (कोई दोष नहीं है ।) प्रश्न - घ्राणेन्द्रियसन्निकर्ष भी गन्धमात्र का व्यंजक है अतः उसमें व्यभिचार हो जायेगा । उत्तर—द्रव्यत्वे सति यह विशेषण हेतु में दे देना-(सो घ्राणेन्द्रियसन्निकर्ष द्रव्य नहीं है—अतः व्यभिचार न हुवा) । विषय इति । उपभोग के साधन को विषय कहते हैं, सभी कार्य अदृष्ट के अधीन रहते हैं, जो कार्य जिसके अदृष्ट के अधीन रहता है वह उसके उपभोग को साक्षात्—अथवा परम्परा से उत्पन्न करता ही है । क्योंकि विना किसी बीज (कारण) के तथा प्रयोजन के किसी भी कार्य की उत्पत्ति नहीं होती है । अतः द्व्यणुक से लेकर ब्रह्माण्डपर्यन्त सभी विषय हैं । शरीर तथा इन्द्रिय भी यद्यपि विषय हैं—तथापि शिष्य बुद्धि के वैशद्य के लिये प्रकारान्तर से उपन्यास किया ॥३८॥

---

मादाय लक्षणं संगमनीयं ! तत्राह मानुषत्वचैत्रत्वादीति । न चोक्तजातीनां शरीरनिष्ठत्वे मानाभावः । चैत्रो जानातीति प्रतीत्याऽऽत्मनिष्ठत्वकल्पनाया एवोचितत्वात् । य एव चैत्रः कौमारेऽधितिष्ठत् स एव वार्द्धक्ये मथुरायामधिवसती"त्यस्यानुपपत्तेश्च । एतेन चैत्रादिशब्दानां शरीरवाचित्वेपि अवच्छेदकतया ज्ञानवत्त्वस्यापि तत्र संभवान्न पूर्वप्रतीतेरनुपपत्तिरित्यपास्तमिति वाच्यम् । आत्म-

निष्ठत्वे चैत्रत्वस्य जातित्वासंभवात्। "चैत्रो रूपवानिति" प्रत्ययानुपपत्तिप्रसंगाच्च शरीरवाचित्वमेव, जानातीतिप्रतीतेस्तूक्तैव गतिः। "य एव चैत्र" इत्यादौ तु तच्छरीरोपहितात्मनि निरूढलक्षणा, इत्थं च शिवत्वविष्णुत्वादिजातयोऽपि शरीरनिष्ठा एव। एवमहमादिशब्दानामपि शरीरवाचित्वमेवेति।

इत्थम् = अनेनप्रकारेण। प्रकारमाह **घ्राणेन्द्रियमिति**। अत्र घ्राणत्वमेव पक्षतावच्छेदकमिन्द्रियत्वप्रवेशे प्रयोजनाभावात्। **पार्थिवमिति**। पृथिवीजन्यमित्यर्थः। समवायेन पृथिवीत्वं साध्यमिति तु तत्त्वम्। तेन पृथिवीजन्यत्वसिद्धावपि न पृथिवीत्वासिद्धिदोषतादवस्थ्यम्। न च पृथिवीजन्यत्वेन पृथिवीत्वानुमानम्, रूपादौ व्यभिचारात्। नवशरावगन्धव्यंजकजले मनसि च व्यभिचारवारणाय "एव"कारः, तादृशजलस्य सक्तुरसाभिव्यंजकत्वान्नोक्तदोषः। गन्धत्व-तत्समवायव्यंजके घ्राणे गन्धेतराव्यंजकत्वविशिष्टगन्धव्यंजकत्वस्य गन्धस्यैवाभिव्यंजकपदाभिधेयस्य हेतोः स्वरूपासिद्ध्यापत्त्या **रूपादिषु मध्ये** इत्यन्तम्। रसगन्धस्पर्शाः आदिपदार्थाः। तत्सहितैवकारेण च गन्धभिन्नरूपाद्यन्यतमाव्यंजकत्वे सति गन्धव्यंजकत्वादिति हेतुः फलितः। न च घ्राणस्य रूपाद्यव्यंजकत्वमसिद्धम्, घ्राणपक्षकरूपविधेयकानुमितिकारणीभूतरूपवदवयवारब्धज्ञानविषयीभूतस्य रूपवदवयवारब्धस्य तादात्म्येन हेतुविधया "घ्राणस्य" रूपव्यंजकत्वादिति वाच्यम्। तादृशरूपाद्यन्यतमविषयकलौकिकसाक्षात्काराऽजनकत्वस्य विवक्षितत्वात्। न चैवमपि पक्षस्यापि कालोपाधितया तादृशोपाधिरूपकालस्य कार्यत्वेन रूपेण रूपादिविषयकलौकिकप्रत्यक्षस्य जनकत्वादसिद्ध एव हेतुः, रूपादिग्रहत्वावच्छिन्नकार्यतानिरूपितकारणत्वाभावस्य विवक्षणे तु चक्षुरादावपि तादृशकारणत्वाभावेन रूपादिग्रहत्वावच्छिन्नकार्यतानिरूपितकारणतारूपप्रतियोग्यप्रसिद्धेः, द्रव्यसमवेतचाक्षुषत्वस्यैव तज्जन्यतावच्छेदकत्वात्। प्रत्यक्षे सामान्यतो विषयत्वेन, तत्तद्व्यक्तिप्रत्यक्षे तत्तद्व्यक्तित्वेन वा हेतुत्वान्न रूपादावपि तादृशप्रतियोगिप्रसिद्धिसंभवः, रूपादिग्रहत्वावच्छिन्नकार्यतानिरूपितकारणत्वाभाववति जन्यज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताशालिनि गन्धाभिव्यञ्जकत्वशाल्यात्मनि व्यभिचाराच्च। न च गन्धाभिव्यंजकत्वमपि गन्धलौकिकघ्राणजत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वरूपमात्मव्यावृत्तमेव वक्तव्यमिति वाच्यम्, ईदृशगन्धाभिव्यंजकत्वस्य घ्राणमात्रवृत्तितया सत्यन्तवैयर्थ्यात्, दृष्टान्ताऽसिद्धिप्रसंगाच्चेति वाच्यम्। रूपाद्यन्यतमाऽव्यंजकत्वे **सतीत्यस्य** कार्यत्वातिरिक्तधर्मावच्छिन्नरूपादिग्रहनिष्ठकार्यतानिरूपितकारणत्वाभावरूपस्य विवक्षितत्वात्। चक्षुरादेस्तु कार्यत्वातिरिक्तद्रव्यसमवेतचाक्षुषत्वावच्छिन्नरूपादिग्रहनिष्ठकार्यतानिरूपितकारणताशालित्वात्, आत्मादेरपि कार्यत्वातिरिक्तजन्यज्ञानत्वावच्छिन्नरूपादिग्रहनिष्ठकार्यतानिरूपितकारणताशालित्वान्नातिप्रसंगः। जलादावपि तादृशकारणत्वाभावस्य सत्त्वाद् व्यभिचारवारणाय गन्धव्यंजकत्वनिवेशः। तथाच कार्यत्वातिरिक्तधर्मावच्छिन्नगन्धभिन्न-

रूपाद्यन्यतमविषयकलौकिकसाक्षात्कारनिष्ठकार्यतानिरूपितकारणतानवच्छेदकत्वे सति कार्यत्वातिरिक्तधर्मावच्छिन्नगन्धग्रहवृत्तिकार्यतानिरूपितकारणतावच्छेदको यो धर्मस्तद्वत्त्वादिति हेतुः फलितः। तेन यादृशजलेन सक्तुरसो नाभिव्यंजितस्तत्रापि न व्यभिचार इति संक्षेपः।

घृतेपि कुंकुमगन्धाभिव्यंजकत्ववत् स्वीयरूपादिव्यंजकत्वस्य सत्त्वादसिद्धो दृष्टान्त इति शंकते **नचेति । तस्य** = नवशरावगन्धाभिव्यंजकजलस्य। लाघवादाह **यद्वेति ।** उपनीताः समानीताः ये सुरभिभागा इत्यर्थः। सुरभित्वोक्तिस्तु सौरभादेर्भानं नाश्रयं विनेति तत्कल्पना साधीयसीति प्रदर्शनाय। **घ्राणेन्द्रियसन्निकर्षस्य** = घ्राणसंयुक्तसमवायस्य । **तत्र** = घ्राणेन्द्रियसन्निकर्षे, घ्राणसंयुक्तसमवाये इति यावत्। परे तु उक्तानुमानस्याऽप्रयोजकत्वान्न पृथिवीत्वसाधकत्वम्। नापि जलत्ववत्त्वम्, सांसिद्धिकद्रवत्ववत्त्वाभावात्। नापि तेजः, उष्णस्पर्शाभावात्। नापि वायुः, सदातनगतिमत्त्वाभावात्। नाप्याकाशादिचतुष्टयं, विभुत्वाभावात्। नापि मनः, अनित्यत्वात। गुणाश्रयत्वाच्च न गुणादिष्वपि। न च गुणाश्रयत्वमेवाऽसिद्धम्। तस्यासिद्धत्वे संयोगाभावेन संयुक्तसमवायलक्षणसन्निकर्षाऽसंभवाद्गन्धप्रत्यक्षानुपपत्तिप्रसंगात्, अतश्चाऽनायत्या पृथिव्यामेवान्तर्भाव इति प्राहुः। अनुमानाऽप्रयोजकत्वस्यावेदितत्वेन क्लृप्तपदार्थानन्तर्भावे चाऽतिरिक्तपदार्थकल्पनायां एवोचितत्वात्। अतिरिक्तपदार्थकल्पनैव गरीयसीति चेद्, भ्रान्तोसि-नहि अतिरिक्तपदार्थकल्पनायां गौरवसंभावनाऽप्यवतिष्ठते, प्रत्युत द्रव्यत्वजलत्वादिसंबन्धाकल्पनेन लाघवम्, नित्यत्वोक्तिस्तु असंप्रतिपन्ना। न च तस्य नित्यत्वे व्यपेतघ्राणस्यापि गन्धोपलंभापत्तिः। श्रोत्रशब्दस्याऽदृष्टविशेषोपगृहीतकर्णशष्कुल्यवच्छिन्ननभोवाचित्वमिव घ्राणशब्दस्यापि अदृष्टविशेषोपगृहीततादृशपदार्थवाचित्वाभ्युपगमेनोक्तस्थलेऽदृष्टविशेषाभावनिबन्धनगन्धानुपलंभसंभवादिति तु विभावनीयम्। विषयत्वं न जातिः-सामान्यादौ सत्त्वादित्यतस्तल्लक्षणमाह **उपभोगसाधनमिति ।**

सुखदुःखान्यतरसाक्षात्कार उपभोगः। तत्साधनं च साक्षात् परम्परया च, तेन द्व्यणुकादेर्नासंग्रहः। यद्यपि परम्परयोपभोगसाधनत्वं परमाणावपि तथाप्यनित्यपृथिव्या एव विभागात्कार्यरूपपृथिवी एव विषयत्वेन दर्शिता। **कार्यजातं**= कार्यसमूहः। जातपदं संपातादायातम्, सर्वमित्यनेनैवाऽशेषत्वलाभादिति भावः। **अदृष्टाधीनं** = अदृष्टजन्यं, तथाच कार्यं प्रति स्वसमवायिसंयुक्तसंयोगेनाऽदृष्टं कारणम्, तेन विभुद्वयसंयोगानङ्गीकारेपि आत्मसंयुक्तपवनसंयोगसंबन्धस्य गगनेपि सत्त्वेन शब्देऽदृष्टजन्यत्वोपपत्तिः। **यदृष्टाधीनं** = यत्पुरुषीयादृष्टाधीनम्। **तत्**= कार्यं। **तदुपभोगं** = तत्पुरुषस्य सुखदुःखान्यतरसाक्षात्कारम्। **बीजप्रयोजनाभ्यां**= कारणफलाभ्याम्। **उत्पत्तिरिति ।** उत्पत्तिश्च स्वाधिकरणसमयध्वंसानधिकरणसमयसंबन्धरूपा। स्वपदमुत्पत्त्याश्रयत्वेनाभिमतघटादिपरम्। घटाद्युत्पत्तिक्षणस्यापि

वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।
स्नेहस्तत्र, द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥३९॥

जलं निरूपयति—वर्णः शुक्ल इति । स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिः सिद्ध्यति । यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं, तथापि जन्यस्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न स्यात्तत्र जन्यस्नेहाभावात्, तस्य च नित्यस्य स्वरूपयो-

जल का निरूपण करते हैं—जल में अभास्वर शुक्लरूप है—मधुर-रस है—तथा शीतस्पर्श है—और स्नेह तथा सांसिद्धिकद्रवत्व भी जल में रहता है । स्नेह का समवायिकारण हुआ जल-समवायिकारणतावच्छेदकतया जलत्वजाति की सिद्धि हुई । यद्यपि स्नेहत्व नित्यस्नेह-तथा अनित्यस्नेह में रहने के नाते कार्यतावच्छेदक नहीं हो सकता है—तथापि जन्यस्नेहत्व को कार्यतावच्छेदक बना देना । प्रश्न—जन्यस्नेहत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतया-सिद्ध जो जलत्वजाति वह परमाणु में न रहेगी—क्योंकि परमाणु में जन्यस्नेह नहीं है । यदि स्वरूपयोग्यत्वरूपा कारणता मानें तो वह भी नहीं मान सकते—क्योंकि नित्य में योग्यत्वरूपा

---

विषयितासंबन्धेन घटाद्यधिकरणीभूतं यत्पूर्वोत्पन्नज्ञानादिकं तद्ध्वंसाधिकरणत्वादुत्पत्तिमात्रेऽसंभवः स्यादतः कालिकसंबन्धेन स्वाधिकरणत्वलाभार्थमाद्यं समयपदम् । एवं भाविघटगोचरज्ञानस्य स्वाधिकरणसमयध्वंसानधिकरणस्य विषयतासंबन्धेऽतिप्रसंगवारणाय द्वितीयं (समय) पदम्-कालिकसंबन्धलाभाय, तथाच स्वाधिकरणसमयध्वंसाधिकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवदनुयोगिकत्व-स्वप्रतियोगिकत्त्वोभयसंबन्धेन स्वविशिष्टकालिकत्वं स्वोत्पत्तित्वम् । एतच्च महाप्रलयाङ्गीकारमते चरमपदार्थध्वंसोत्पत्तावव्याप्तम्, तत्र तादृशध्वंसाधिकरणं महाकालः ध्वंसात्मकखण्डकालो वा, उभयोरपि ध्वंसाऽप्रसिद्धेः । अतो यदीययत्समयसंबन्धसामान्ये यत्समयवृत्तिध्वंसप्रतियोगित्वाभावः तस्य तत्समयसंबन्धः सा इति । यो यत्कालवृत्तिध्वंसप्रतियोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपरे । विस्तरस्तु ग्रन्थान्तरादवसेयः । **तेन**=द्व्यणुकादीनामुपभोगसाधनत्वेन । **विषयत्वेपि**= उपभोगसाधनत्वेपि । **प्रकारान्तरेण** = शरीरेन्द्रियत्वादिना । **वैशद्यायेति** । शरीरत्वेन्द्रियत्वेन ज्ञानसंपत्तये इत्यर्थः । तथाच शरीरेन्द्रियभिन्नत्वे सति उपभोगसाधनत्वं विषयस्य लक्षणम् ॥३८॥

लक्षणं कर्तुं लक्ष्यतावच्छेदकजलत्वजातौ मानमाह **स्नेहसमवायिकारणतावच्छेदकतयेति** । समवायसंबन्धावच्छिन्नस्नेहत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतयेत्यर्थः । तथा च समवायसंबन्धावच्छिन्नस्नेहत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् इत्यनुमानेन जलत्वजातिः सिद्ध्यतीति भावः । जलत्वं जातिः नित्यत्वे सति

ग्यत्वे फलावश्यंभावनियमादिति चेत्। न, जन्यस्नेहजनकतावच्छेदकतया जन्यजलत्वजातेः सिद्धौ, तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः। शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं-वर्णः शुक्ल इति, न तु शुक्लरूपवत्त्वं लक्षणम्। अथवा नैमित्तिकद्रवत्ववदवृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्या-

कारणता यदि मानें तो कभी फल अवश्य ही होना चाहिये। उत्तर—सो ठीक नहीं—जन्यस्नेहत्वावच्छिन्नजन्यतानिरूपित जनकतावच्छेदकतया जन्यजलत्वजाति की सिद्धि करके—फिर जन्यजलत्वावच्छिन्न जन्यतानिरूपितजनकतावच्छेदकतया जलत्वजाति की सिद्धि कर लेना—वह जलत्वजाति परमाणुजल में भी है।

जल में शुक्लरूप भी रहता है यह दिखलाने के लिये "वर्णः शुक्लः" कहा अर्थात् जल का वर्ण (रूप) शुक्ल होता है यही तात्पर्य है शुक्लरूपवत्त्वलक्षण नहीं। यदि वह लक्षण ही मानना अभीष्ट हो तो "नैमित्तिक द्रवत्व के अधिकरण में न रहने वाली-और रूप के अधिकरण में रहने वाली जो द्रव्यत्व साक्षात् व्याप्यजाति तादृशजातिमत्त्व यह शुक्लरूपवत्व का अर्थ कर देना -(इससे पृथिवी-तथा तेज में अतिव्याप्ति नहीं हुवी—क्योंकि पृथिवीत्व तथा तेजस्त्व जाति नैमित्तिक द्रवत्ववान् जो घृतरूपा पृथिवी तथा सुवर्णादिरूप तेज उसमें वृत्ति ही है) अथवा अभास्वरशुक्ल से इतर जो रूप उसके अधिकरण में न रहनेवाली तथा रूप के अधिकरण में रहनेवाली जो द्रव्यत्व साक्षात् व्याप्यजाति तादृशजातिमत्व यही शुक्लरूपवत्व का अर्थ कर देना--इससे स्फटिक में अतिव्याप्ति नहीं है।

---

अनेकसमवेतत्वान् व्यक्त्यभेदादिरूपबाधकविरहाच्चेति जलत्वे जातित्वमपि सिद्ध्यति। स्नेहत्वस्य कार्यतावच्छेदकत्वं न संभवतीत्याशंकते यद्यपीति। नित्यानित्यवृत्तितया=परमाणुस्नेहे द्व्यणुकादिस्नेहे च वृत्तितया। न कार्यतावच्छेदकमिति। कार्यतातिरिक्तवृत्तित्वादिति भावः। कारणं बिना कार्यतावच्छेदकावच्छिन्नसत्त्वरूपव्यभिचारस्तथासति स्यादिति ध्येयम्। कारणस्य कार्यतावच्छेदकावच्छिन्नोत्पत्तेरेव व्यभिचारित्वान्नित्यवृत्तेस्तत्त्वेपि न क्षतिः, तथाच जलत्वजातिरेकैवेति नव्याः। ननु नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वे बाधकाभाव इति चेन्न। कारणत्वं यदि अनन्यथासिद्धत्वे सति कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वं तदा एकघटलक्षणकार्याव्यवहितपूर्वक्षणावच्छेदेनापरघटलक्षणकार्याधिकरणे दण्डाभावस्य सत्त्वेन दण्डत्वादेः प्रतियोगितावच्छेदकत्वाद्दण्डघटयोः कार्यकारणभावानुपपत्तिप्रसंगः। अतः कार्यतावच्छेदकावच्छिन्नयावद्व्यक्तीस्तत्तद्व्यक्तित्वेन प्रवेश्य तत्तद्व्यक्त्यव्यवहितपूर्वक्षणावच्छेदेन तत्तद्व्यक्त्यधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपमेव कारणत्वं निर्वाच्यम्, इत्थं च नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वे नित्यव्यक्तेरपि कार्यतावच्छेदकावच्छि-

प्यजातिमत्त्वं वा तदर्थः। तेन स्फटिकादौ नातिव्याप्तिः। रसस्पर्शाविति। जलस्य मधुर एव रसः, शीत एव स्पर्शः। तिक्तरसवदवृत्तिमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः। तेन शर्करादौ नातिव्याप्तिः। शीतेतरस्पर्शवदवृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः। ननु शुक्लरूपवत्त्वमेवेति कुतः, कालिन्दीजलादौ नीलिमोपलब्धेरिति चेत्, न, नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासंभवात्। कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी। अत एव वियति विक्षेपे धवलिमोपलब्धिः। अथ जले माधुर्ये किं मानम्, नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते। न च नारिके-

जल रस मधुर ही होता है—और स्पर्श शीतल ही होता है। प्रश्न—मधुररसवत्व इसकी शर्करा में अतिव्याप्ति है। उत्तर—मधुररसवत्व का "तिक्तरसवत् में अवृत्ति मधुररसवत् में वृत्ति जो द्रव्यत्वसाक्षात् व्याप्यजाति तादृशजातिमत्त्व' यह अर्थ कर देना। एवं शीतलस्पर्शवत्व का भी "शीतेतरस्पर्शवत् में अवृत्ति स्पर्शवत् में वृत्ति जो द्रव्यत्व साक्षात् व्याप्यजाति तादृशजातिमत्व" यह अर्थ कर देना। प्रश्न—जल में शुक्ल ही रूप क्यों है—यमुना नदी आदि के जल में नीलिमा की प्रतीति होती है। उत्तर—ऐसा नहीं—नीलरूप का समवायिकारणतावच्छेदक जो पृथिवीत्वजाति वह जल में नहीं है—अतः नीलरूप भी जल में नहीं है। और यमुना के जल में नीलिमा की जो प्रतीति होती है वह आश्रयोपाधिक है—(अर्थात् उस जल का आश्रय जो पृथिवी वहनीली है अतः उस पृथिवी की नीलिमा ही उस जल में भास रही है)। इसीलिये यमुना के जल को आकाश में (ऊपर को) उछालने से उस जल की धवलिमा की उपलब्धि (प्रत्यक्ष) स्पष्टरूप से हो जाती है। प्रश्न—जल के माधुर्य में क्या प्रमाण है। क्योंकि प्रत्यक्षप्रमाण से जल में किसी भी रस का अनुभव नहीं होता है। यदि कहें कि नारियल आदि के जल में माधुर्य मालूम पड़ता है तो वह आश्रयोपाधिक है (अर्थात् आश्रय के कारण उसमें मधुरता प्रतीत होती है) अन्यथा नीबू आदि के

---

न्नान्तःपातितया तदव्यवहितपूर्वकालाप्रसिद्धया कारणत्वानुपपत्तिलक्षणबाधकसंभवादिति। परे तु कार्यतावच्छेदककारणतावच्छेदकभेदेन कार्यकारणभावभेदाद्यत्र नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वं, तत्र यासामव्यवहितपूर्वकालः प्रसिद्धः तासामेव व्यक्तीनां प्रवेशनीयतया नानुपपत्तिलेशोपीत्याहुः। एतच्च व्यामोहमात्रम्, तथाहि—स्वेच्छया व्यक्तिनिवेशे धूमपरामर्शस्य कार्यतावच्छेदककोटौ कृतं धूमलिङ्गकत्वप्रवेशनायासेन। तत्रापि यादृशव्यक्तीरादाय धूमपरामर्शेऽनवच्छेदकधर्मवत्त्वं संभाव्यते तासामेव व्यक्तीनां प्रवेशो वाच्य इत्यलं वाग्जालेन। जन्यस्नेहत्वं = जन्यस्नेहवृत्तिजातिविशेषः। तथाच तदवच्छिन्नाऽसमवायिकारणतावच्छेदकतया स्नेहत्वजातिरिति भावः। अत्र च कालिकसमवाययोः कार्यतावच्छेदकतावच्छेदकसंबन्धत्वमङ्गीकृत्य स्नेहत्वस्यैव कार्यतावच्छेदकत्वमंगीकरणीयम्। एतेन जन्यत्वस्य

ध्वंसप्रतियोगित्वरूपत्वे प्रागभावप्रतियोगित्वेन विनिगमनाविरहः, तदनभ्युपगमे तु कालिकेन पटादिमत्त्वमादायापीति कार्यकारणभावानन्त्यकल्पनमापद्यते इति प्रतारणमपास्तम्। **तथा** =कार्यतावच्छेदकम्। जन्यस्नेहजनकतावच्छेदकतया सिद्धायाः जलत्वजातेः परमाण्वादिवृत्तित्वे साधकाभावं मन्वान आशङ्कते **अथेति**। **परमाणौ** = जलपरमाणौ। **तत्र** = जलपरमाणौ। **जन्यस्नेहाभावात्** = जन्यस्नेहसमवायिकारणत्वाभावात्। परमाणौ तत्स्वरूपयोग्यतया जलत्वमस्तु अत आह **तस्य चेति**। जलपरमाणोश्चेत्यर्थः। ननु जन्यस्नेहसमवायिकारणतावच्छेदकतया सिद्धाया अपि जलत्वजातेः परमाणुवृत्तितायां बाधकाभावेनाऽदोषात्तत्राह **नित्यस्येति**। इदं च कदाचिदपि सामग्रीसमवधानं भविष्यत्येवेति लाभाय। **स्वरूपयोग्यत्वे** = कारणतावच्छेदकधर्मवत्त्वे। इदमत्र तत्त्वम्—बाधकाभावेपि साधकाभावेन तत्र तादृशजातेर्वृत्तित्वे मानाभाव इत्येव वाच्यम्, न तु तत्स्वीकारे बाधकमस्ति-अनुकूलतर्काभावेन नियमस्याप्रयोजकतया बाधकत्वाऽसंभवात्। न च नियमाप्रयोजकत्वेपि आपादकस्य हेतोः सत्त्वे कार्योत्पादवारणं दुर्वारम् जन्यस्नेहत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेनाऽवयवस्नेहत्वेन हेतुत्वात्त्रापादनाऽसंभवात्, नहि एककारणसत्त्वदशायामपरकारणविरहदशायामापत्तिरस्तीति कृतं तदभ्युपगमेन। **जन्यजलत्वजातेः** = जन्यजलमात्रवृत्तिजातेः। **तदवच्छिन्नेति**। जन्यजलत्वावच्छिन्नेत्यर्थः। नन्वेवमपि जन्यस्नेहसमवायिकारणतावच्छेदकतया सिद्धाया जन्यजलत्वजातेर्यथा न परमाणुवृत्तित्वं तथा जन्यजलत्वावच्छिन्नसमवायिकारणतावच्छेदकतया सिद्धाया अपि जलत्वजातेर्नान्त्यावयविजलवृत्तित्वं साधकाभावात्, तथाच नित्यानित्यसाधारणजलत्वजातौ मानाभाव इति चेन्न। जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया सिद्धजलत्वस्यान्त्यावयविजलवृत्तित्वानभ्युपगमे स्नेहजनकतावच्छेदकतया सिद्धजात्या सांकर्यवारणाय तत्रापि तद्वृत्तित्वमुपगन्तव्यमिति सिद्धं सर्वजलसाधारणं जलत्वमिति। वस्तुतो जलत्वस्याऽन्त्यावयवित्वं नाभ्युपगम्यते जलमात्रे जलान्तरसंयोगेन बृहज्जलजननादिति ध्येयम्। "वर्णः शुक्ल" इत्यस्य लक्षणत्वाऽसंभवेन वैयर्थ्यमाशंक्याह **शुक्लरूपमेवेति**। शुक्ल इति सावधारणम्। जले शुक्लरूपं नान्यरूपमिति बोधः। इत्थं च जलत्वे शुक्लेतररूपासामानाधिकरण्यं शुक्लरूपसामानाधिकरण्यं च लब्धं, तत्रैवाऽद्यशुक्लेऽभास्वरत्वविशेषणं प्रक्षिप्याऽन्त्यशुक्लरूपे शुक्लत्वं विहाय चान्त्यलक्षणमिति सूचयितुमुक्तमुक्तमिति।

**नन्विति**। स्फटिकादिरूपद्वितौ तेजसि चातिव्याप्तेः। **अथवेति**। अवृत्त्यन्तं वृत्त्यन्तं व्याप्यान्तं च जातिविशेषणम्। पृथिवीत्वतेजस्त्ववारणायाऽवृत्त्यन्तम्। जलत्वसंग्रहाय **नैमित्तिकेति**। वायुत्वादिवारणाय वृत्त्यन्तम्। घटत्वादिवारणाय द्रव्यत्वसाक्षाद्व्याप्येति। तद्दोषतादवस्थ्यवारणाय **साक्षादिति**। द्रव्यत्वसाक्षाद्व्याप्यत्वं च द्रव्यत्वव्याप्यत्वे सति द्रव्यत्वव्याप्याव्याप्यत्वम्।

न्वयः। यद्येकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा। चित्रपदं तात्पर्यग्राहकम्। एवमारूढवानरोवृक्ष इत्यत्र वानरपदे वानरारोहकर्मणि लक्षणा आरूढपदं च तात्पर्यग्राहकम्। एवमन्यत्रापि।

तत्पुरुषे तु पूर्वपदे लक्षणा। तथा हि। राजपुरुष इत्यादौ राजपदार्थेन

गो के साथ अभेदेन अन्वय कर देना—और यदि एकदेशान्वय नहीं स्वीकार करते हैं तब गोपद की चित्रगोस्वामी में लक्षणा कर देना—और चित्रापद को पूर्ववत् तात्पर्यग्राहक बना देना—( अर्थात् गोपदं चित्रगोस्वामिनमर्थं बोधयतु ) एवम् 'आरूढ़वानरो वृक्षः' यहाँ पर भी वानरपदकी वानरारोहणकर्म में लक्षणा करके-आरूढपद को तात्पर्यग्राहक बना देना। इसी प्रकार अन्यत्र भी जानना चाहिये। ( बहुव्रीहि में उत्तरपद में लक्षणा होती है ) तत्पुरुष समास में पूर्वपद में लक्षणा होती है–तथाहि–'राज्ञः पुरुष इति राजपुरुषः' इस षष्ठी

---

संभवति भ्रमत्वकल्पनाया अन्याय्यत्वादित्याहुः। तत्र विभक्त्यर्थान्वयानुपपत्तेः। वाक्यस्य विभक्तिप्रकृतित्वाभावात्। गभीरायां नद्यामिति विभक्त्यन्तभागस्य लक्षणायां लक्ष्यार्थस्य "गभीरनदीतीरस्य" आधेयतया घोषादावन्वयानुपपत्तेः, नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात्। तादृशतीरवृत्तौ लक्षणायामपि घोषादावभेदेनाऽन्वयाऽसंभवः, नाम्नोः समानविभक्तिकत्वाभावादित्यास्तां विस्तरः। बहुव्रीहाविति। चित्रा गावो यस्य-आरूढः वानरोयमित्यादि बहुव्रीहावित्यर्थः। एवमित्यस्यार्थमाह! तत्रेत्यादि। यद्येकदेशान्वयः स्वीक्रियते इति। शरैः शातितपत्रक इत्यादौ शरकरणकत्वस्य शातितपदार्थैकदेशे शातनेऽन्वयस्य सर्वानुमतत्वादिति भावः। गोमति। गोस्वामिनि। न स्वीक्रियते इति। इति विभाव्यते इति शेषः। गोधर्मिकान्वयबोधे गोधर्मिकवृत्तिज्ञानस्य हेतुताया आवश्यकत्वात्। अन्यथा चित्रव्रजोस्ती त्यादावपि व्रजपदार्थस्य गोसंस्थानरूपस्यैकदेशे गवि चित्रान्वयप्रसंगात्। चित्रापदं तात्पर्यग्राहकमिति। न च चित्रपदमेवतादृशार्थकं, गोपदं तात्पर्यग्राहकमित्येव किं न स्यादिति वाच्यम्। विभक्त्यर्थान्वयानुपपत्तेः प्रकृत्यर्थे एव सुपः संख्याबोधकत्वव्युत्पत्तेः। चित्रापदस्य तत्र प्रकृतित्वाभावादिति भावः. एवं चित्रगुरस्तीत्यादौ चित्रपदस्य प्रथमान्तत्वाभावेन तदर्थेऽस्तित्वाद्यन्वयबोधानुपपत्तेश्च प्रथमान्तपदो पस्थाप्यस्यैव भावनाविशेष्यत्वात्। अन्यथा राजपुरुषोस्तीत्यादावपि राजनि अस्तित्वान्वयप्रसंगात्।

अथ चित्रगुरस्तीत्यादौ गोपदं चित्रगोस्वामिनि लक्षकम्। चित्रपदं तात्पर्यग्राहकमित्यपि न युक्तम्। तथा सति प्रकृत्यर्थे सुपः संख्याबोधकत्वोपपादनेपि पूर्वपदार्थसाकांक्षस्यैव स्वार्थस्योपसर्जनतायां "गोस्त्रियोरुपसर्जनस्ये" ति सूत्रेण

सह पुरुषपदार्थस्य साक्षान्नान्वयो, निपातातिरिक्तनामार्थयोर्भेदेनान्वयस्याऽव्युत्पन्नत्वात्। अन्यथा राजा पुरुष इत्यत्रापि तथान्वयबोधः स्यात्। घटो

तत्पुरुष समास में राजपदार्थ के साथ पुरुषादिपदार्थ का साक्षात् ( स्वत्वादिरूपभेद ) सम्बन्ध से अन्वय नहीं होता है—क्योंकि निपात से अतिरिक्त नामार्थद्वय का भेद ( साक्षात् ) सम्बन्ध

---

गोपदस्य ह्रस्वविधानात्, चित्रपदार्थेन समं तदर्थानन्वये तदनुपपत्तेः। न च स्वार्थोपसर्जनगोपदस्यैव ह्रस्वविधानोक्तदोष इति वाच्यम्। तथा सति गोरस्तीत्यादावपि चित्राभिन्नस्वगोसंबन्धित्वेन गोपदस्य लक्षणायामुदन्तत्वापत्तेः। न च नामोत्तरवर्त्तिन एव गोपदस्य स्वार्थोपसर्जनत्वे ह्रस्वविधिः। यत्र गोपदेन लक्षणायोपस्थापिते "चित्राऽभिन्नस्वगोसंबन्धिनि" अभेदेन चित्रपदस्याऽन्वयस्तत्र "चित्र" गवोस्तीत्यादिकर्मधारयेपि गोपदस्य ह्रस्वप्रसंगात्। इतिचेदत्र मान्याः। चित्रगुरित्यत्र गोपदं स्वगोस्वामिनि लक्षकं तदेकदेशे गवि तादात्म्येन चित्रपदार्थस्यान्वयः। घटशून्यम्, चैत्रस्य गुरुकुलम् इत्यादितत्पुरुषे भेदेनेव चित्रगुप्रभृतिबहुव्रीहावपि अभेदेन एकदेशान्वनबोधोपपत्तये पदार्थः पदार्थेनान्वेतीतिव्युत्पत्तिसंकोचस्यावश्यकत्वात्। तत्पुरुषबहुव्रीह्यघटकः पदार्थः पदार्थेनान्वेतीति व्युत्पत्तेः स्वीकारात्। फलानुरोधित्वात्कल्पनायाः। प्राच्यैरपि सुन्दरराजपुरुष इत्यादावभेदेन सुन्दरादेः पदार्थैकदेशे राजन्यन्वयबुद्धेः स्वीकारश्चेति प्राहुः। इदन्तु बोध्यम्। चित्रा गावोयस्येति विग्रहवाक्येन यत्संबन्धिनः चित्रा गाव इति बोधाद् बहुव्रीहिसमासे विग्रहवाक्याद्यादृशविशेषणविशेष्यभावोपन्नवाक्यर्थबोधो भवति समासवाक्यात्तद्विपरीतविशेषणविशेष्यभावापन्नार्थबोधो भवति इति नियमात्चित्रगोस्वामी इति बोधोजायते। एवमारूढः वानरोयमिति विग्रहवाक्याद्यत्कर्मकारोहणकर्ता वानर इति बोधः। समासवाक्याद्वानरकर्तृकारोहणकर्म वृक्ष इति बोधः।

**तत्पुरुषे** इति। तत्पुरुषसामान्ये इत्यर्थः। **लक्षणेति**। निरूढलक्षणेत्यर्थः। तामेवोपपादयति **तथाहीति**। **राजपदार्थेन**। राजपदशक्यार्थेन। **साक्षादिति**। विभक्त्यर्थमद्वारीकृत्येत्यर्थः। तेन राज्ञः पुरुष इत्यादौ षष्ठ्यर्थस्वत्वसंबन्धेनापि पुरुषे राज्ञोऽन्वये न क्षतिः। **निपातेति**। अव्यन्यरूपनिपातेत्यर्थः। **अन्यथा** नामार्थयोः साक्षाद्भेदान्वयस्यापि व्युत्पन्नत्वे। **राजा पुरुष इत्यत्रापीति**। राजपद पुरुषपदाभ्यामिति शेषः। **तथान्वयबोधापत्तेरिति**। राजपुरुषयोः साक्षाद् भेदेनान्वयबोधापत्तेरित्यर्थः। स्वत्वसंबन्धेन राजप्रकारकपुरुषविशेष्यकशाब्दबोधापत्तेरिति भावः। **नञः**। अन्योन्याभावस्य। **साक्षादेव**। विभक्त्यर्थमद्वारीकृत्य। **अन्वयादिति**। नञर्थे भेदे घटस्य स्वप्रतियोगिकत्वसंबन्धेन, भेदस्य च पटे स्वरूपसंबंधेनान्वयादित्यर्थः। ननु निपातातिरिक्तनामार्थयोरन्वयबोधो न भवती-

न पट इत्यादौ घटपटाभ्यां नञःसाक्षादेवान्वयान्निपातातिरिक्तेति । नीलोघट इत्यादौ नामार्थयोरभेदसम्बन्धेनान्वयाद्भेदेनेति । न च राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम् । अस्मृतविभक्तेरपि ततोबोधोदयात् ।

से अन्वय नहीं होता है—अन्यथा ( इस नियम को अनङ्गीकार करने पर ) 'राजापुरुषः' यहाँ भी स्वत्वादिरूपभेद सम्बन्ध से अन्वयबोध होना चाहिये–[ अभिप्राय यह है कि 'राजपुरुषः' यहाँ पर वैयाकरणलोग लुप्तषष्ठीविभक्ति का स्मरण करके–तदर्थ स्वत्व मानकर–उस विभक्त्यर्थस्वत्व में राजपदार्थ का निरूपितत्वसम्बन्ध से अन्वय करते हैं--और स्वत्व का स्वरूपसम्बन्ध से पुरुष में अन्वय करके यह शाब्दबोध उपपन्न करते हैं कि 'राजनिरूपितस्वत्ववान् पुरुषः' । इस पर नैयायिकों का कहना है कि व्यर्थ में इतना गौरव उठाना–अथ च नियमविरोध करना अनुचित है–अतः राजपद की राजसम्बन्धी में लक्षणा करके उसका पुरुष के साथ अभेदेन अन्वय कर देना–इससे यह बोध हो गया कि 'राजसम्बन्ध्यभिन्नः पुरुषः' ] उक्तनियम में निपातातिरिक्तपद के न देने पर "नामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात्" इतना अवशिष्ट रहा । अर्थात् नामार्थद्वय का भेद सम्बन्ध से अन्वयबोध नहीं होता है, ऐसी स्थिति में 'घटोनपटः' यहाँ पर पट का प्रतियोगितारूपभेदसम्बन्ध से नञर्थभेद में अन्वय होकर, और भेद का स्वरूपात्मकभेदसम्बन्ध से घट में अन्वय होकर, इससे "पटप्रतियोगिकभेदवान् घटः" यह जो शाब्दबोध होता है–वह अनुपपन्न हो जावेगा–क्योंकि नियमबाधक हो रहा है–अतः 'निपातातिरिक्त' कहा–तो निपातातिरिक्तनामार्थद्वय का भेद सम्बन्ध से अन्वय नहीं होता है–परन्तु निपातार्थ और नामार्थ का परस्पर भेद सम्बन्ध से अन्वय तो निराबाध ही है । 'नीलो घटः' यहाँ पर नील और घट इन दोनों नामार्थों का अभेद सम्बन्ध से अन्वयबोध उपपन्न करने के लिये 'भेदेन' यह पद दिया–देने से यह अर्थ हुवा कि निपातातिरिक्तनामार्थद्वय का भेदसम्बन्ध से अन्वयबोध ( शाब्दबोध ) नहीं होता है–किन्तु अभेद सम्बन्ध से शाब्दबोध होने में कोई बाधक नहीं है–अतः नीलो घटः यहाँ पर नील-घट इन नामार्थद्वय का अभेदेन अन्वयबोध बन जावेगा ।

प्रश्न—'राजपुरुषः' यहाँ पर लुप्त षष्ठी विभक्ति का स्मरण करके तदर्थ 'स्वत्व' मानकर–उसका स्वरूपसम्बन्ध से पुरुष में अन्वय करके राजनिरूपितस्वत्ववान् पुरुषः यह शाब्दबोध क्यों न स्वीकार कर लिया जाय ।

उत्तर—यह ठीक नहीं–क्योंकि जिस पुरुष को 'राजपुरुष' यहाँ लुप्तषष्ठी विभक्ति का स्मरण नहीं है उसे भी राजपुरुषः इस वाक्य से शाब्दबोध होता है-इस कारण से राजपद

---

स्येवोच्यतामित्यत आह । नीलो घट इत्यादाविति । राजपुरुष इत्यादाविति । राजपदोत्तरमिति शेषः । लुप्त विभक्ते रिति । समासत्वाल्लुप्तषष्ठीविभक्ते रित्यर्थः । स्मरणंकल्प्यमिति । तथा चाऽत्रापि प्रत्ययार्थद्वारैव राजपुरुषयोरन्वयान्नोक्तव्युत्पत्तिविरोधः, न वा पूर्वपदलक्षणेति भावः । अस्मृतेति । सुप्तविभक्तिमजानतोपि शाब्दबोधोदयादिति भावः । तस्मात्—भेदाऽन्वयाऽसंभवेनाऽभेदान्वयबोधात ।

**तस्माद् राजपुरुष इत्यादौ राजसम्बन्धिनि लक्षणा, तस्य च पुरुषेण-सहाभेदान्वयः।**

**द्वन्द्वे तु धवखदिरौ छिन्धीत्यादौ तु धवः खदिरश्च विभक्त्यर्थ-द्वित्वप्रकारेण बुध्यते तत्र न लक्षणा। न च साहित्येलक्षणेति वाच्यम्। साहित्यशून्ययोरपि द्वन्द्वदर्शनात्। न च एकक्रियान्वयित्वरूपं साहित्यमस्तीति**

की राजसम्बन्धी में लक्षणा करके ( अर्थात् राजपद से लक्षणा द्वारा 'राजसम्बन्धी' रूप अर्थ की उपस्थिति करके ) फिर राजसम्बन्धी का पुरुष के साथ अभेदेन अन्वय कर दीजिये–तब "राजसम्बन्ध्यभिन्नः पुरुषः" यह शाब्दबोध उपपन्न हो जायेगा। एवं "धवखदिरौ छिन्धि" इत्यादि इतरेतरद्वन्द्वस्थल में 'औ' इस विभक्ति का अर्थ जो द्वित्व-तादृशद्वित्वप्रकारकधव-खदिरोभयविशेष्यक शाब्दबोध उपपन्न हो ही जावेगा–फिर लक्षणा मानना व्यर्थ है।

प्रश्न—मीमांसक कहता है कि धवखदिरौ का अर्थ है धवसहित जो खदिर 'तं छिन्धि' यह जो धव का सामानाधिकरण्यरूपसाहित्य खदिर में इस अर्थ से सिद्ध हो रहा है–वह साहित्य रूप अर्थ किसी पद की शक्ति के द्वारा तो आ नहीं रहा है–क्योंकि शक्ति तो धवपद की धवरूप अर्थ में–और खदिरपद की खदिररूप अर्थ में है–साहित्य अर्थ में किस पद की शक्ति है अतः साहित्य ( अर्थात् साहित्याश्रय , में खदिरपद की लक्षणा मानकर "धवसहितं खदिरं छिन्धि" यह 'धवखदिरौ छिन्धि' से बोध क्यों न मान लिया जाय।

---

**राजसंबन्धिनि।** राजादिसंबन्धिनि। **पुरुषेण।** पुरुषादिना। **द्वन्द्वेत्विति।** इतरेतरद्वन्द्वेत्वित्यर्थः। **बुध्यते** इति। तथा च धवखदिरौ द्वित्ववन्तौ इति बोधो जायते इति भावः। अथ प्रकृत्यर्थे द्वित्वादिसंख्या पर्याप्तिसंबन्धेन प्रकारः, समवायेन तथात्वे आकाशादिपदादपिद्विवचनाद्यापत्तेः। न च पर्याप्तेः संसर्गत्वेपि तद्दोष-तादवस्थ्यम्, घटाकाशादौ द्वित्वपर्याप्तिसत्त्वे प्रत्येकमाकाशेपि तत्पर्याप्तिसत्वात्, प्रत्येकस्योभयानतिरेकादिति वाच्यम्। उद्देश्यतावच्छेदकव्याप्यपर्याप्तेरेव संसर्ग-त्वात्। एवं च धवखदिरौ इत्यत्र प्रत्येकं धवत्वं खदिरत्वं च न द्वित्वोद्देश्यतावच्छे-दकम्, उद्देश्यतावच्छेदकव्याप्यपर्याप्तेर्द्वित्वसंबन्धत्वे धवखदिरौ छिन्धीत्यादौ उद्देश्यतावच्छेदकीभूतधवत्वखदिरत्वव्याप्यं द्वित्वादिद्वयमेव प्रत्येतव्यम्, न तु धवखदिरपर्याप्तद्वित्वम्, उद्देश्यतावच्छेदकीभूतधवत्वाभाववति खदिरेद्वित्वस्य वृत्तेः एवं तादृशखदिरत्वाभाववति धवे तस्य वृत्तिता बोध्या। तथा चैकैकधव-खदिरादितात्पर्येण तथाप्रयोगानुपपत्तिरितिखदिरपदस्य धवखदिरसाहित्याश्रये लक्षणा वाच्या। एवं च साहित्यस्यैवोद्देश्यकतावच्छेदकत्वे धवद्वयादिगतद्वित्वस्य साहित्यव्याप्यत्वाभावेन धवखदिरोभयगतद्वित्वस्यैव तद्व्याप्यत्वात् न धवद्वयादि बोधापत्तिर्नवा धवखदिरोभयबोधानुपपत्तिरिति मीमांसकमतं शंकते। **नचेति।** **साहित्ये।** सहवृत्तित्वरूपसाहित्याश्रये। **साहित्यशून्ययोरपीति।** व्यधिकरणधव-खदिरयोः गोत्वाश्वत्वयोर्वेत्यर्थः। **द्वन्द्वदर्शनादिति।** धवखदिरौ पश्य, गोत्वा-

वाच्यम् । क्रियाभेदेपि धवखदिरौ पश्य छिन्धीत्यादिदर्शनात्, साहित्यस्याननुभवाच्च । अत एव राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र लक्षणाऽभावाद् द्वन्द्व आश्रीयते । तस्मात्साहित्यादिकं नार्थः ।

उत्तर—'साहित्य' अर्थ से शून्य पदार्थों का भी द्वन्द्व देखा जाता है–जैसे 'हिमविंध्यौ' ।

प्रश्न—सामानाधिकरण्य-एवं एकक्रियान्वयित्वरूप जो यह दो प्रकार का साहित्य है–उसमें से सामानाधिकरण्यरूप साहित्य की अनुपपत्ति हो–परन्तु. एकक्रियान्वयित्वरूप साहित्य को क्यों न मान लिया–क्योंकि 'धवखदिरौ छिन्धि' यहाँ पर धव-खदिर–दोनों का छेदनरूप एक क्रिया के साथ अन्वय है ।

उत्तर—जहाँ जिस व्यक्ति ने धव को देखने के अभिप्राय से, खदिर को छेदने के तात्पर्य से "धवखदिरौ पश्य छिन्धि" यह प्रयोग किया तो वहाँ दर्शन-तथा छेदन रूप क्रिया का भेद होने पर भी धवखदिर का द्वन्द्व तो स्पष्ट ही है—परन्तु दर्शन–छेदन–क्रियाद्वय के होने से एक क्रिया ही नहीं है—अतः एकक्रियान्वयित्वरूप साहित्य भी सर्वथा अनुपपन्न है । दूसरा उत्तर यह भी है कि 'धवखदिरौ' यहाँ पर धव और खदिर के साहित्य का अनुभव भी नहीं होता है । ( अत एव ) द्वन्द्वस्थल में लक्षणा के न मानने प्रयुक्त ही—"राजपुरोहितौ सायुज्यकामौ यजेयाताम्" अर्थात् सायुज्यमुक्ति की कामनावाले राजा और पुरोहित दोनों यज्ञ करें–इत्यादिस्थल मे लक्षणा के अभाव से हीं द्वन्द्व का आश्रयण करते हैं—( 'राजपुरोहितौ' ( अर्थात् राजा के दो पुरोहित–) इस षष्ठीतत्पुरुष का आश्रयण इसीलिये नहीं करते कि लक्षणा माननी पड़ जायगी ] इसलिये 'धवखदिरौ' यहाँ इतरेतरद्वन्द्व स्थल में साहित्य अर्थ नहीं है ।

---

धवे पश्य इत्यादिप्रयोगदर्शनादित्यर्थः । तथा च तत्र साहित्यस्य बाधितत्वान्नसाहित्याश्रये लक्षणेति भावः । एकजातीयक्रियान्वयित्वरूपसाहित्यमत्र विवक्षितमित्याशयेनाह । **न चेति । एकक्रियान्वयित्वरूपमिति ।** एकजातीयक्रियान्वयित्वरूपमित्यर्थः । **क्रियाभेदेपि** । क्रियावैजात्येपि **धवेति** । यथासंख्यं दर्शने धवस्य छिदिक्रियायां खदिरस्यान्वयः । द्विवचनमविवक्षितम् । न चैकवचनं स्यात् । समाहारद्वन्द्व एव एकवचनानुशासनबलेनाऽन्यद्वन्द्वे द्विवचनबहुवचनयोरेव साधुत्वात् । अत्र साहित्यस्य बाधात् । मास्त्वन्वयः, अबाधिते तु स्यादित्यत आह । **अननुभवाच्चेति ।** केचित्तु एकजातीयक्रियानिष्ठसाक्षादेकजातीयसंसर्गनिरूपकत्वम् — धवखदिरविशेष्यकधीविशेषविषयत्वं वा धवखदिरयोः साहित्यं, तदाश्रयश्च धवद्वयादिकमपीतितादृशसाहित्याश्रयलक्षकत्वपक्षेपि धवद्वयादिबोधस्य दुर्वारतापत्तेः । त्रितयाऽविशेष्यक धवखदिरधर्मिकधीविशेष्यत्वमेव प्रकृते धवखदिरयोः साहित्यं, तच्च न धवद्वयादेरित्युक्तौत्वाह **अननुभवाच्चेति ।** प्राहुः । साहित्यविषयकशाब्दस्याननुभवादित्यर्थः । तथाच शाब्दस्याननुभवे तत्र वृत्त्यकल्पनादिति भावः । **अतएव** । इतरेतरद्वन्द्वेसाहित्यस्याननुभवादेव । **लक्षणाभावा-**

**किन्तु वास्तवोभेदो यत्र तत्र द्वन्द्वः। न च नीलघटयोरभेद इत्यादौ कथमिति वाच्यम्। तत्र नीलपदस्य नीलत्वे घटपदस्य घटत्वे तात्पर्यात्। अभेद इत्यस्य चाश्रयाभेद इत्यर्थः।**

प्रश्न—[ यदि द्वन्द्व में लक्षणा नहीं है तो कर्मधारय से द्वन्द्व का किंप्रयुक्त भेद कहा जायगा। क्योंकि कर्मधारय में ही लक्षणा नहीं है ]

उत्तर—जहाँ समस्यमान दो पदार्थों में परस्पर वास्तविक भेद रहता है वहीं द्वन्द्व समास होता है—( और जहाँ भेद नहीं रहता वहाँ कर्मधारय होता है )

प्रश्न—तब फिर 'नीलघटयोरभेदः' यहाँ नील तथा घट का द्वन्द्व कैसे हुवा—( क्योंकि नील और घट में तो कोई भेद ही नहीं है—कारण कि नीलपद यहाँ पर नील गुण परक नहीं है अपितु नीलगुणविशिष्ट परक है—अतः नीलगुणविशिष्टघटआदि ही अर्थ है )

उत्तर—'नीलघटयोरभेदः' यहाँ पर नीलपद नीलत्व में और घटपद की घटत्व अर्थ में लक्षणा है—( अतः इन दोनों का परस्पर भेद होने के कारण द्वन्द्व बन जाता है ) और 'अभेद' का अर्थ है आश्रयाभेद' ( अर्थात् नीलत्व—और घटत्व—इन दोनों के आश्रय जो नील और घट—उनका अभेद—सो उनका अभेद है ही है )। ( द्वन्द्व दो प्रकार का है इतरेतरद्वन्द्व—

---

**दिति।** लक्षणाभावादेवेत्यर्थः। **आश्रीयते इति।** अङ्गीक्रियते इत्यर्थः। श्रुतौ पुरोहितश्च पुरोहितश्च पुरोहितौ राज्ञःपुरोहितौ राजपुरोहितौ इतिषष्ठीतत्पुरुषः—राजा च पुरोहितश्च राजपुरोहितौ इति द्वन्द्वोवेति सन्देहे द्वन्द्वएवाङ्गीकृतः तत्पुरुषे तु राजपदस्य राजसंबन्धिनि लक्षणायां गौरवादिति भावः। अत्र मीमांसकाः—एकक्रियान्वयित्वंअत्र साहित्यं न विवक्षितम्, किन्तु अपेक्षाबुद्धिविशेषस्वरूपम्, तदवच्छेदेन विभक्त्यर्थद्वित्वान्वयः, अन्यथा धवखदिरौ इत्यादौ धवद्वयखदिरद्वयादिधीःस्यात्। एकघटसत्वेघटौ इत्यादि प्रयोगापत्त्या विभक्तेःप्रकृत्यर्थतावच्छेदकव्याप्यसंख्याबोधकत्वव्युत्पत्तेः। एवं च साहित्यमेव प्रकृत्यर्थतावच्छेदकं तद्व्याप्यंधवखदिरादिद्वित्वादिकमेवेति धवखदिर-द्वयादेर्बोधः, न तु धवद्वयखदिरद्वयादेरित्याहुः। तन्न। यत्रैकधर्मो द्वित्वाद्युद्देश्यता-वच्छेदकस्तत्रैवोद्देश्यतावच्छेदकव्याप्यसंख्याबोधकत्वम्। यत्रनानाधर्मस्तथा—तत्र सकलतत्तत्समानाधिकरणद्वित्वादिबोधकत्वव्युत्पत्तिः। कालाकाशघटादिवृत्ति-त्रित्वादिकमादायाऽऽकाशकालाः इत्यादिप्रयोगापत्त्या तादृशव्युत्पत्तिघटकद्वित्वादौ तत्तत्प्रकृत्यर्थतावच्छेदकान्यतरत्वावच्छिन्नव्याप्यत्वमपि विशेषणीयम्। **तस्मात्** साहित्यस्याननुभवात्। कर्मधारयाद् द्वन्द्वस्य वैलक्षण्यमाह। **किन्त्विति।** चार्थेद्वन्द्व इत्यनुशासने चार्थे पदार्थयोर्भेदेसति द्वन्द्वोभवतीत्याशयेनाह। **वास्तवोभेद इति।** वस्तुप्रतियोगिकोभेद इत्यर्थः। एतेन पदार्थयोरभेद-बोधककर्मधारयाद्भेदोदर्शितः। **नीलघटयोरिति।** अत्र नीलश्च घटश्चेति द्वन्द्वः। नीलश्चासौघटश्चेतिकर्मधारयेद्विवचनानुपपत्तेः। **कथमिति।** कथं

समाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयते इत्युच्यते तदा अहिनकुल-मित्यादौ परपदे अहिनकुलसमाहारे लक्षणा पूर्वपदं तु तात्पर्यग्राहकम्। न च भेरीमृदङ्गंवादयेत्यत्र कथं समाहारस्यान्वयः, अपेक्षाबुद्धिविशेषरूपस्य तस्य वादनासंभवादिति वाच्यम्। परंपरासंबन्धेन तदन्वयात्। एवं

समाहारद्वन्द्व–प्रथम कों कह चुके है कि उसमें लक्षणा नहीं होती है––) और समाहारद्वन्द्व में समाहार का भी अनुभव ( शाब्दबोध ) होता है–अर्थात् समाहार का भी शाब्दबोध में भान होता है–ऐसा यदि कहते हो तब "अहिनकुलम्" यहाँ परपद ( नकुलपद ) की अहिनकुल-समाहार में लक्षणा करके पूर्वपद ( अहिपद ) को 'नकुलपदं अहिनकुलसमाहारं बोधयतु' इस तात्पर्य का ग्राहक बना देना।

प्रश्न—"भेरीमृदङ्गं वादय" इत्यादिस्थल में समाहार का वादन में अन्वय कैसे होगा–क्योंकि अपेक्षाबुद्धिविशेषविषयत्वरूप समाहार का वादन असंभव है–[ अभिप्राय यह है कि 'भेरी च मृदङ्गश्च एतयोः समाहारः इति ,भेरीमृदङ्गम्" यहां पर मृदङ्गपद की भेरी-मृदङ्ग समाहार में लक्षणा है–भेरीपदं भेरीमृदङ्ग समाहारं बोधयतु वक्ता के इस तात्पर्य का ग्राहक है–लक्षणा द्वारा यह वाक्यार्थ सम्पन्न हुवा कि 'भेरीमृदङ्ग समाहारं वादय' सो यहां समाहार का वादन में अन्वय कैसे हुवा हुवा––क्योंकि समाहार प्रकृत में भेरीमृदङ्ग-गतद्वित्वरूप है––और वह द्वित्व अपेक्षाबुद्धिविशेषविषयत्वरूप है–अतः अपेक्षाबुद्धिविशेषविषय-त्वरूप द्वित्व का वादन में अन्वय कैसे होगा–वादन तो भेरी––और मृदङ्ग का होगा–इसलिये वादन में समाहार का अन्वय असंभव होने के कारण समाहार में लक्षणा व्यर्थ है–यह पूर्व-पक्षी का आशय है ]

उत्तर––यह ठीक नहीं–स्वाश्रयवृत्तित्वरूप परम्परासम्बन्ध से अपेक्षाबुद्धिविशेषविषयत्व रूप समाहार का वादन में अन्वय हो जावेगा–( क्योंकि स्वपद से समाहार–उसका आश्रय भेरी मृदङ्ग––उसमें वृत्ति है वादन–स्वाश्रयवृत्तित्व सम्बन्ध से समाहार का वादन में अन्वय

---

द्वन्द्वः समास इत्यर्थः। पदार्थयोर्भेदाभावादिति भावः। तत्र। नीलोत्पलमिति-वाक्ये। इदन्त्ववधेयम्। एवं रीत्यानिर्वाहेपि प्रमाणप्रमेयेत्यादिगौतमसूत्रेऽगतिरेव, तत्र द्वन्द्वानुरोधेन चार्थे पदार्थतावच्छेदकभेदे इति व्याख्येयम्। न च घटावित्यादौ पदार्थतावच्छेदकभेदाभावात्सरूपैकशेषानुपपत्तिः, तस्य द्वन्द्वापवाद-कत्वात् इति सकृदुच्चरितमित्यादिनियमाभावेन एकघटादिपदादेव नानाघटोप-स्थिति-नानाघटादौद्वित्वान्वयसंभवादुक्तसरूपैकशेषस्याभावात् सरूपैकशेषविधेस्तु हरी इत्यादौ सार्थक्यादिति।

**समाहारोप्यनुभूयते** इति। अहिनकुलमित्यादौ अहिनकुलयोः समाहार इति प्रतीतेरनुभवसिद्धत्वादित्यर्थः। समाहारस्यैकत्वादेकवचनम्, अनुशासनंतु अह्यादिगतसंख्याधीव्यवच्छेदाय। वादनासंभवात्। वादनकर्मत्वासंभवात्।

पञ्चमूलीत्यादावपि। परे तु अहिनकुलमित्यादौ अहिर्नकुलश्च बुध्यते प्रत्येक-मेकत्वान्वयः। समाहारसंज्ञा चयत्रैकत्वं नपुंसकत्वं च द्वन्द्वश्च प्राणितूर्येत्यादि-सूत्रेणोक्तं तत्रैव। अन्यत्रैकवचनमसाध्वित्याहुः। पितरौ श्वशुरौ इत्यादौ पितृपदेजनकदंपत्योर्लक्षणा, श्वशुरपदे स्त्रीजनकदंपत्योर्लक्षणा। एवमन्यत्रापि। घटा इत्यादौ तु न लक्षणा घटत्वेन रूपेण नानाघटोपस्थितिसंभवात्।

कर्मधारयस्थले तु नीलोत्पलमित्यादौ अभेदसंबन्धेन नीलपदार्थ उत्पलपदार्थे प्रकारः। तत्र च न लक्षणा अतएव निषादस्थपतिं याजये-

होना उचित ही है—अतः समाहार में लक्षणा हो सकती है ) ऐसे ही पञ्चमूली यहाँ पर भी मूल पद की पञ्चमूलसमाहार में लक्षणा—पञ्चपद तात्पर्यग्राहक। नवीन नैयायिकों का ऐसा कहना है कि "अहिनकुलम्" यहाँपर अहि-तथा नकुल दोनों का बोध होता है-( किन्तु समाहार का बोध नहीं होता है ) और एक वचन से बोधित एकत्व संख्या का अहि–तथा नकुल प्रत्येक के साथ अन्वय है, और "द्वन्द्वश्चप्राणितूर्य सेनाङ्गानाम्" इस सूत्र से जहाँ एकत्व तथा नपुंसकत्व बोधित हो—वहीं समाहार संज्ञा होती है—और अन्यत्र ( समाहारातिरिक्त इतरेतर-द्वन्द्वस्थल में ) एक वचन असाधु है। एवं 'पितरौ' 'श्वसुरौ' यहाँ क्रमशः पितृपद की पुरुष के जनक जो पुरुष के माता-पिता उन दोनों में लक्षणा है—और श्वसुरपद की स्त्री के जनक जो स्त्री के माता पिता-उन दोनों में लक्षणा है। ऐसे ही अन्यत्र भी समझना। 'घटाः' यहाँ पर लक्षणा नहीं है क्योंकि घटत्वरूप से नानाघट की उपस्थिति हो जायेगी–( अतः घट-पद की नानाघट में लक्षणा मानने की कोई आवश्यता नहीं है ) नीलञ्च तदुत्पलञ्चेति नीलोत्पलम्' यहाँ कर्मधारयस्थल में अभेद ( तादात्म्य ) सम्बन्ध से नीलपदार्थ उत्पलपदार्थ में

---

विलक्षणशब्दानुकूल "अभिघाताख्य" संयोगावच्छिन्नक्रियायावादनपदार्थतया तादृश-संयोगरूपकर्मत्वस्य समाहारेऽसंभवादिति भावः।

परंपरासंबन्धेनेति। स्वाश्रयवृत्तित्वसंबन्धेनेत्यर्थः। तदन्वयात्। समाहारे वादनकर्मत्वान्वयात्। एवमिति। पञ्चानां मूलानां समाहारः पञ्चमूली। अत्रापि मूलपदस्य पञ्चमूलसमाहारे लक्षणा पञ्चपदं तात्पर्यग्राहकमिति भावः। नव्यमतमाह परेत्विति। बुध्यते इति। न तु समाहारोपीति शेषः नन्वेवं धवखदिरमित्यादि-प्रयोगोपि स्यात्, प्रत्येकमेकत्वसत्वादित्यत आह। समाहारसंज्ञाचेति। तत्रैवेति। तथाचानुशासनविषय एव नपुंसकलिङ्गैकवचने, अन्यद्वद्वे तु नैकवचनमिति नोक्तापत्तिरिति भावः।

अत्र नानाप्रकृत्यर्थः, एवं च उद्देश्यतावच्छेदकसमानाधिकरणसंख्याबोधकत्व-व्युत्पत्तिभंगः, प्रत्येकमेकत्वस्य प्रकृत्यर्थतावच्छेदकसकलाऽसमानाधिकरणत्वादित्य-स्वरस आहुरित्यनेनसूचितः। पितराविति। जनकदंपत्योर्बोधतात्पर्येणोच्चरित-पितराविति वाक्ये इत्यर्थः। यथाश्रुते दत्तकस्य पितृद्वयसंभवेन सरूपैकशेषत्वप्राप्त्या जनकदम्पत्यो लक्षणेति मूलग्रन्थविरोधापत्तेः। अत्र माता च पिता च पितरौ इति

दित्यत्र न तत्पुरुषोलक्षणापत्तेः, किन्तु कर्मधारयोलक्षणाभावात्। न च निषादस्य सङ्करजातीयत्वेन वेदानधिकाराद्याजनाऽसंभव इति वाच्यम्। निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनात्। लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवस्यादोषत्वादिति।

प्रकार ( विशेषण ) है–अतः कर्मधारय में लक्षणा नहीं है। इसी लिये "निषादस्थपतिं याजयेत्" यहाँ पर "निषादानांस्थपतिः" यह तत्पुरुष समास नहीं किया जाता है—क्योंकि लक्षणा की आपत्ति लग जायेगी—किन्तु 'निषादश्चासौ स्थपतिश्च' इत्याकारक कर्मधारय ही मानना उचित है--क्योंकि लक्षणा नहीं माननी पड़ती है।

प्रश्न--निषाद नाम है वर्णसंस्कार का–और स्थपति नाम है स्वामी का–सो इस वाक्य में कर्मधारय मानने से निषादरूप स्थपति का बोध होता है - परन्तु उसका प्रकृत में उपयोग नहीं–क्योंकि निषादनामक संकरजाति विशेषको "स्त्री शूद्रो नाधीयाताम्" इस वेद वचन के अनुसार वेदाध्ययन का अधिकार नहीं—"शूद्रवद् वर्णसंकराः" इस निर्णयसिन्धुकार वचन से वर्णसंकर–तथा शूद्र को वेदाध्ययन निषिद्ध है। वेदानधिकार होने से याजन भी निषादरूप यजमान को संभव नहीं है ( अतः 'निषादानां स्थपतिः' अर्थात् निषादों के स्वामी किसी ब्राह्मण या क्षत्रिय को मान कर–उसको याजन का संभव होने के नाते 'निषादस्थपतिं याजयेत्' यह वाक्य सार्थक हो सकता है–)

उत्तर—यह कथन ठीक नहीं है–क्योंकि निषाद को ( विद्याप्रयुक्ति ) वेदाध्ययनाधिकार की कल्पना ( तत एव ) याजनानुपपत्ति से कर लेनी चाहिये। अर्थात् वेदाध्ययन के बिना याजन अनुपपन्न हो रहा है।

प्रश्न—कर्मधारयपक्ष में याजन की कल्पना उसके लिये फिर वेदाध्ययन की कल्पना इसी में गौरव है–अतः 'निषादानां स्थपतिः' यह तत्पुरुष ही क्यों न मान लिया जाय।

उत्तर—कर्मधारय में लक्षणा के न मानने प्रयुक्त लाघव होने से निषादात्मकस्थपति रूप मुख्यार्थ के साथ याजनात्मक मुख्य अर्थ का अन्वय करने में निषाद में वेदाध्ययन के बिना याजन की अनुपपत्ति हो रही है ( तदनुपपत्त्या ) निषाद में उस याजन के अन्वय की अनुपपत्ति से वेदाध्ययन की जो कल्पना है–उसमें गौरव अवश्य है–परन्तु वह गौरव फलमुख

---

विरूपैकशेषो बोध्यः। श्वशुराविति। स्त्रीजनकदम्पत्योर्बोधतात्पर्येणोच्चरितश्वशुराविति वाक्ये इत्यर्थः। यथाश्रुते द्विभार्यस्य श्वशुरद्वयसंभवेन सरूपैकशेषत्वप्राप्त्या स्त्रीजनकदम्पत्योर्लक्षणेति मूलग्रन्थविरोधापत्तेः। अत्र श्वश्रूश्च श्वसुरश्च श्वशुराविति विरूपैकशेषो बोध्यः। **एवमन्यत्रापीति**। ब्राह्मणी च ब्राह्मणश्च ब्राह्मणौ शिवा च शिवश्चेति शिवौ इत्यादयो बोध्याः। **अतएव**। कर्मधारयेलक्षणाऽभावादेव। निषादः-संव्यवहार्यसंकरजातिविशेषः। स्थपती राजा। न तत्पुरुषः। स्वीक्रियते इति शेषः। निषादानां स्थपतिरिति तत्पुरुषो न स्वीक्रियते इति भावः। इदमुपलक्षणम्, न बहुव्रीहिरित्यपि बोध्यम्। **लक्षणापत्तेरिति**। निषादसंबन्धिनि लक्षणापत्तेरित्यर्थः। **कर्मधारय** इति।

उपकुम्भम्, अर्धपिप्पलीत्यादौ परपदे तत्संबन्धिनि लक्षणा पूर्वपदार्थ प्रधानतया चान्वयबोध इति। इत्थं च समासे न क्वापि शक्तिः पदशक्त्यैव निर्वाहादिति।

गौरव होने के नाते दोष नहीं है। [ अर्थात् तत्पुरुष पक्ष में लक्षणाङ्गीकार प्रयुक्त गौरव की अपेक्षा कर्मधारयपक्ष में निषाद में याजनान्वयानुपपत्ति प्रयुक्त वेदाध्ययन की कल्पना में फलमुखगौरव होने से दोष नहीं है-अतः 'निषादश्चासौ स्थपतिश्च' यह कर्मधारय ही उचित है ] 'कुम्भस्य समीपम् उपकुम्भम्' यहाँ पर परपद जो कुम्भपद-उसकी ( तत्सम्बन्धिनि ) कुम्भ सम्बन्धी में लक्षणा करके पूर्वपद जो ( उपपद ) तदर्थ ( समीप ) को प्रधान बनाकर अभेदेन अन्वय कर देना "कुम्भसम्बन्ध्यभिन्नं समीपम्" इसी प्रकार 'अर्द्धपिप्पली' यहाँ पर भी परपद ( पिप्पलीपद ) की पिप्पली सम्बन्धी में लक्षणा करके पूर्वपदार्थ ( अर्द्ध ) विशेष्यक अभेदान्वयबोध कर लेना चाहिये "पिप्पलीसम्बन्ध्यभिन्नमर्द्धम्"। इस प्रकार वैयाकरणों के अभिमत समास में कहीं भी शक्ति नहीं है पदशक्ति से ही निर्वाह हो जायेगा।

---

स्वीक्रियते इति शेषः। **वेदानधिकारादिति**। स्त्रीशूद्रौवेदंनाधीयातामिति वेदे शूद्रपदस्यत्रैवर्णिकेतरपरतया मन्त्रपाठेऽनधिकारादित्यर्थः। याजना। तत्तन्मन्त्रपाठानुकूलव्यापारः। विधिर्मन्त्रपाठः, स एव विद्याप्रयुक्तिः। **तत एव**। उक्तविधिवाक्यादेव। ननु बहुव्रीहितत्पुरुषयोर्ब्राह्मणादिवर्णत्रयपरतया नापूर्वविद्याप्रयुक्तिकल्पनागौरवम्, कर्मधारये तु तदस्तीति लक्षणाया अकल्पनलाघवमकिंचित्करमतः कर्मधारयस्वीकारे हेत्वन्तरमाह। लाघवेनेति। लक्षणायाअकल्पनलाघवेनेत्यर्थः। **मुख्यार्थस्यान्वये**। शक्यार्थान्वयबोधे। जाते सतीति शेषः। **तदनुपपत्त्या**। मुख्यार्थान्वयानुपपत्तिज्ञानेन। **कल्पनायाः**। अपूर्वविद्याप्रयुक्तिकल्पनायाः। **फलं**—लक्षणाया अकल्पनं—**तन्मुखं** तत्प्रयोज्यं गौरवं—गौरवज्ञानमित्यर्थः।

**उपकुम्भं अर्धपिप्पलीत्यादाविति**। कुम्भस्यसमीपमुपकुम्भमित्यव्ययीभावे पिप्पल्याअर्धं अर्धपिप्पलीति तत्पुरुषे चेत्यर्थः। **परपदे**—कुम्भपदे पिप्पलीपदे चेत्यर्थः। **तत्संबन्धिनि**। कुंभसंबन्धिनि—पिप्पलीसंबन्धिनि चेत्यर्थः। **लक्षणेति** निरूढलक्षणेत्यर्थः। **पूर्वपदार्थप्रधानतयेति**। उपपदार्थ अर्धपदार्थविशेष्यतयेत्यर्थः। **अन्वयबोध इति**। तथा च कुंभसंबन्ध्यभिन्नं समीपं, पिप्पलीसम्बन्ध्यभिन्नम र्धमिति बोध इत्यर्थः। अत्रेदं बोध्यम्। परपदे तत्संबन्धिनि लक्षणेति न सम्यक्। तथासति विभक्त्यर्थसंख्या कर्मत्वादेरुत्तरपदार्थसंबन्धिन्येवान्वयापत्तेः। पूर्वपदार्थेऽन्वयानुपपत्तेश्च अत उत्तरपदस्यैव विशिष्टार्थे लक्षणा पूर्वपदन्तु तात्पर्यग्राहकम्। नचैवं पूर्वपदार्थस्य प्रधानत्वानुपपत्तिः। यत्र हि विशेष्यः वस्तुगत्या पूर्वपदार्थः, न तु पूर्वपदजन्योपस्थितिविशेष्यस्तत्रैव पूर्वपदार्थप्रधानत्वमिति ध्येयम्। **इत्थंचेति**।

**आसत्तिर्योग्यताकाङ्क्षा तात्पर्यज्ञानमिष्यते ॥ ८२ ॥**
**कारणं सन्निधानं तु पदस्यासत्तिरुच्यते।**

आसत्तीत्यादि। आसत्तिज्ञानं योग्यताज्ञानमाकाङ्क्षाज्ञानं तात्पर्यज्ञानं च शाब्दबोधे कारणम्। तत्रासत्तिपदार्थमाह। सन्निधानं त्विति। यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः शाब्दबोधे कारणम्। तेन गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ न शाब्दबोधः। नीलो घटो द्रव्यंपट इत्यादावासत्तिभ्रमाच्छाब्दबोधः। आसत्तिभ्रमेण शाब्दभ्रमाभावेपि न क्षतिः।

आसत्तिरित्यादि। आसत्तिज्ञान–योग्यताज्ञान–आकांक्षाज्ञान–तात्पर्यज्ञान–शाब्दबोध में कारण हैं। आसत्तिपदार्थ को बतलाते हैं (सन्निधानं त्विति) पद के सन्निधान (सामीप्य) को आसत्ति कहते हैं। जिस पदार्थ का जिस पदार्थ के साथ अन्वय (सम्बन्ध अपेक्षित हो–उन दोनों पदों की अव्यवधानेन उपस्थिति शाब्दबोध में कारण है–इसलिये "गिरिर्भुक्तमग्निमान् देवदत्तेन" यहाँ पर शाब्दबोध नहीं होता है, [ कारण कि वक्ता का तात्पर्य यह है कि 'गिरिः अग्निमान्' अथ च 'देवदत्तेन भुक्तम्' अतः 'गिरि' पदार्थ का 'अग्निमान्' पदार्थ के साथ सम्बन्ध अपेक्षित है–और 'भुक्त' पदार्थ का 'देवदत्तेन' के साथ अन्वय अपेक्षित है–परन्तु इन इन पदों की अव्यवधानेन उपस्थिति न होने के नाते उक्त स्थल में शाब्दबोध नहीं होता है ]

प्रश्न—"नीलो घटो द्रव्यं पटः" यहाँ वक्ता का तात्पर्य जब कि यह है कि 'नीलः पटः' अर्थात् पट नील है–अथ च 'घटो द्रव्यम्' घट द्रव्य है–तब यहाँ नील पद की तथा पट की अव्यवधानेन उपस्थिति न होने के कारण शाब्दबोध कैसे होगा।

उत्तर— उक्तस्थल में भ्रमात्मक आसत्तिज्ञान से ही घट विशेष्यक अभेद सम्बन्धेन नील प्रकारक 'नीलोघटः' इत्याकारक प्रमात्मक शाब्दबोध होता है–भ्रमात्मक आसत्तिज्ञान से (शाब्दबोधभ्रमाभावेऽपि) शाब्दबोध के प्रमा होने में कोई क्षति (आपत्ति) नहीं है।

---

समासेलक्षणानिराकरणप्रकारेणैवेत्यर्थः। **पदशक्त्यैवेति**। समासेघटकीभूतपदशक्तिलक्षणाभ्यामित्यर्थः। वैयाकरणास्तु गंगादिपदानां तीरादौशक्तिरेव। सर्वेषां पदार्थानां प्रायः सर्वत्रैव शक्तिः। (सर्वेसर्वार्थवाचकाः) इत्यभियुक्तोक्तेः अतः लक्षणा स्वतंत्रवृत्तिर्नाभ्युपेयते। तथा च गंगायांघोषः इत्यादौ शक्यतावच्छेदकप्रवाहत्वस्यतीरे आरोपात् गंगात्वरूपेणैवतीरबोधो न तीरत्वेनेत्याहुः।

एतावताशाब्दबोधं प्रति वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिद्वारा पदज्ञानं कारणमित्यायातम्, तथा च सति गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ, वन्हिनासिंचतीत्यादौ, घटः कर्मत्वमानयनंकृतिरित्यादौ च शाब्दबोधानुत्पत्त्या व्यभिचारादाह। मूले **आसत्तीत्यादि**। आसत्तिश्च योग्यता च आकाङ्क्षा च

ननु यत्र छत्री कुण्डली वासस्वी देवदत्त इत्याद्युक्तं तत्रोत्तरपद-स्मरणेन पूर्वपदस्मरणस्य नाशादव्यवधानेन तत्तत्पदस्मरणासंभव इति चेन्न। प्रत्येकपदानुभवजन्यसंस्कारैश्चरमं तावत्पदविषयकस्मरणस्यापि अव्यवधानेनोत्पत्तेः। नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारै

प्रश्न—आपने अव्यवधान से पदों की उपस्थिति को शाब्दबोध में कारण माना—तो जहाँ किसी ने "छत्री कुण्डली वासस्वी देवदत्तः" यह वाक्य कहा—वहाँ "योग्यविभुविशेष गुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात्" इस पूर्वोक्त नियमानुसार उत्तरोत्तर पदों के स्मरण के नाश से पूर्व पूर्वपदस्मरण का नाश होता चला जायगा—सो पूर्वपूर्वपदस्मरण का नाश हो जाने से तत्तत्पदों का स्मरण ( उपस्थिति ) का अव्यवधानरूप से होना असम्भव है—[ अतः अव्यवधानेन तत्तत्पदों की उपस्थितिरूप आसत्तिज्ञान के अनुपपन्न होने के कारण शाब्दबोध भी उक्त वाक्य से अनुपपन्न हो जायेगा ]

उत्तर—यह ठीक नहीं—क्योंकि छत्री—कुण्डली—इत्यादि प्रत्येक पदों को जब कानों से आप सुनेंगे—अर्थात् छत्री—कुण्डली—इत्यादि पदों का जब कि आप श्रोत्रेन्द्रिय से श्रावणप्रत्यक्ष-रूप अनुभव करेंगे तब उस श्रावणप्रत्यक्षरूप अनुभव से उत्पन्न होने वाले जो अन्तिमदेवदत्त-पदस्मरण ( अर्थात् देवदत्तपदजन्यदेवदत्तरूपअर्थोपस्थिति ) काल पर्यन्त आत्मा में रहने वाले प्रत्येक पदविषयकसंस्कार उन संस्कारों से ( चरमस्य ) अन्तिमदेवदत्तपद के श्रावण-प्रत्यक्षरूप अनुभव के अव्यवहितोत्तर काल में तावत्पदविषयक अर्थात् समस्त विशेषण विशेष्य पद समुदायविषयक एकसमूहालम्बनस्मरण की उत्पत्ति हो जाने से अव्यवहितरूप से समस्त पदार्थों की उपस्थितिरूप आसत्तिज्ञान बन गया—अतः आसत्तिज्ञानरूप कारण के निराबाध हो जाने से सम्पूर्ण छत्री—कुण्डली—इत्यादि पदार्थ विषयक शाब्दबोध उपपन्न हो जावेगा।

---

तात्पर्यं चेति द्वन्द्वः तेषां ज्ञानमिति तत्पुरुषः। द्वन्द्वान्तेश्रूयमाणं पदं प्रत्येकमभि-संबध्यतेइति रीत्या फलितार्थमाह। **आसत्तिज्ञानमित्यादि**। कारणमिति फलितमिति शेषः। तथा चाऽऽसत्तिज्ञानादेःसहकारिकारणत्वान्नोक्तान्वयव्यभिचार इति भावः। पदस्यसन्निधानमिति मूलात्पदाव्यवधानरूपाऽऽसत्तिरित्यर्थो लभ्यते एवं च गिरिर्भुक्त-मग्निमान् देवदत्तेनेत्यनासन्नवाक्येऽतिव्याप्तिः, गिरिपदभुक्तपदयोरव्यवधानसत्वादतो व्याचष्टे। **यत्पदार्थेनेति**। **अपेक्षितः**—तात्पर्यविषय इत्यर्थः। **तयोरिति**। तादृशपद-योरित्यर्थः। अव्यवधानेनेति प्रकारे तृतीया। तथा च तादृशपदाव्यवधानमेवाऽऽसत्तिः, तदुपस्थितिश्च शाब्दधीहेतुः। अत एव श्लोकादौ व्यवहिततादृशपदानां योजनया तादृशोपस्थितिःसर्वसिद्धेतिभावः। **तेन**। पदार्थगर्भाऽऽसत्तिनिर्वचनेन। **न शाब्दबोधइति**। अभ्रान्तस्येत्यादिः। तथा च गिरिपदार्थभुक्तपदार्थयोरन्वयो न तात्पर्यविषयोऽपि तु गिरिपदार्थाग्निमत्पदार्थयोरेवेति तयोरव्यवधानाभावान्ना-तिव्याप्तिरिति भावः। **नीलो घटो द्रव्यं पट इत्यादाविति**। नीलपदार्थ-

कस्मरणोत्पत्तेरपि संभवात् । तावत्पदसंस्कारसहितचरमवर्णस्योद्बोधकत्वात् । कथमन्यथा नानावर्णैरेकपदस्मरणम् ।

परं तु तावत्पदार्थानां स्मरणादेकदैव खले कपोतन्यायात् तावत्पदार्थानां क्रियाकर्मभावेनाऽन्वयबोधरूपः शाब्दबोधो भवतीति केचित् । वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत्पतन्ति ।

प्रश्न—छत्री–कुण्डली–इत्यादि पदों के श्रावणप्रत्यक्षरूप अनुभव से जन्य नाना संस्कारों से तो पृथक्-पृथक् नानास्मरण ही होने चाहिये–एक स्मरण कैसे हुवा ।

उत्तर—जैसे घट चक्षुःसंयोग–पट के साथ जो चक्षुःसंयोग–एवं मठ के साथ जो चक्षुःसंयोगरूप नानासन्निकर्षों से एक ही काल में "घट-पट-मठाः" इत्याकारक समूहालम्बन एक ही प्रत्यक्ष जैसे होता है–ऐसे ही नानासंस्कारों से भी एक ही काल में प्रागुक्तार्थविषयक एक समूहालम्बनस्मरण की उत्पत्ति हो जायगी–क्योंकि पूर्वपूर्वपदों के संस्कार सहित जो देवदत्तघटकत्तकारोत्तरवर्त्ती अकाररूप अन्तिमवर्ण–उसका ज्ञान ही उस समूहालम्बनस्मरण का उद्बोधक है । ( कथमन्यथा ) यदि नानासंस्कारसहितचरमवर्ण ज्ञान को समूहालम्बनस्मरण का कारण न माना जाय तो घकार-अकार-टकार-अकार–इन नानावर्णों से होनेवाला जो

---

पटपदार्थयोरन्वयबोधतात्पर्येणोच्चरितनीलोघटो द्रव्यंपटइतिवाक्ये इत्यर्थः । **आसत्तिभ्रमादिति** । नीलपदघटपदयोरित्यादिः । आसत्तिभ्रमादेवेत्यर्थः । नीलपदघटपदयोस्तात्पर्यघटितासत्त्यभावादिति भावः । ननु आसत्तिः स्वरूपसती हेतुरस्तु न तु ज्ञाता श्लोकादौ योजनाचासत्तिसंपत्त्यर्थमित्यत आह । **आसत्तीति** । तथा चा सत्त्यभावेन शाब्दानुपपत्त्या तद्धीहेतुत्त्वमावश्यकमिति भावः । ननु तत्र यद्यासत्ति भ्रमस्तदा शाब्दबोधोपिभ्रमात्मकःस्यादित्यत आह । **आसत्तिभ्रमेणेति** । **न त्वातिरिति** । आसत्तिभ्रमस्य न शाब्दभ्रमजनकत्वं किन्तु योग्यताभ्रमस्येति भावः । **पूर्वपदस्मरणस्य नाशादिति** । योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वादितिभावः । **तत्तत्पदस्मरणासंभव इति** । एवंचानेकविशेषणवाचकपदघटितवाच्यार्थबोधानुपपत्तिः, विशिष्टानुभवस्य विशेषणज्ञानसाध्यत्वनियमादिति भावः । इदमुपलक्षणम् । नानावर्णकपदस्मरणासंभवोपि बोध्यः । नानासंस्कारैर्नानास्मृतिरेव युक्ता नैकेत्यतो दृष्टान्तमाह । **नानासन्निकर्षैरिति** । अन्यसंस्कारकालीनचरमवर्णज्ञानस्य नोद्बोधकत्वमितिज्ञापनाय **तावत्पदसंस्कारसहितेति** । **अन्यथा** । नानासंस्कारैरेकस्मृत्यनुपगमे । वर्णानामाशुविनाशितया क्रमोत्पन्नवर्णानामेकप्रत्यक्षासंभवेनैकसंस्काराभावादितिभावः । वस्तुतस्तु अव्यवहितपदार्थोपस्थितिरासक्तिः स्वरूपसती हेतुः, श्लोकादौ योजनापि तदर्थमेवेति बोध्यम् ।

**तथैव सर्वे युगपत्पदार्थाः परस्परेणाऽन्वयिनोभवन्ति। परेतु यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते तेन तेनाऽन्वितः स्वार्थः पदैरेवावगम्यते तथा च खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्मृत्या महावाक्यार्थ बोध इत्याहुः।**

'घट' इस एक पद का स्मरण वह कैसे होगा—( क्योंकि वर्णात्मशब्द का स्वोत्तरवर्त्तिगुण से तृतीयक्षण में नाश होता चला जायगा अतः वर्णसमुदायरूपपद का स्मरण कैसे होगा—अतः आपको भी 'घट' पद घटक जो प्रागुक्तनानावर्ण—उनके अनुभव से जायमान जो नानासंस्कार—उन संस्कारों से सहित जो टकारोत्तरवर्त्ती अकाररूप चरणवर्ण उसके ज्ञान को ही घटपद विषयक समूहालम्बनस्मरण के प्रति कारण कहना होगा ] कुछ प्राचीन लोगों का ऐसा कहना है कि उन-उन पदजन्य पदार्थों के स्मरण से एक काल ही में 'खलेकपोतन्याय' से सकल पदार्थों का क्रिया कर्म भाव से ( अन्वयबोधरूपः ) पदार्थों के परस्पर सम्बन्धविषयक शाब्दबोध होता है—खलेकपोतन्याय यह है कि जैसे वृद्ध युवा शिशु अवस्था के कपोत ( कबूतर ) ये सभी खल ( खरिहान ) में एक ही काल में ऊपर से उड़ते-उड़ते गिरते हैं, वैसे सब पदार्थ एक ही काल में परस्पर में अन्वित हो जाते हैं। नवीन ऐसा कहते हैं कि जो जो पद आकांक्षा—योग्यता—सन्निधि ( आसत्ति ) से प्रतिपन्न हैं उन उन पदों से अन्वित जो पदार्थ है वह उन्हीं पदों के द्वारा जाना जाता है—सो इस प्रकार "छत्री-कुण्डली" इत्यादि स्थल में 'छत्रविशिष्टोदेवदत्तः' 'कुण्डलविशिष्टो देवदत्तः' 'वस्त्रविशिष्टोदेवदत्तः' इत्याकारकखण्डवाक्यार्थ बोध होने के अनन्तर ( तथैव ) क्रमानुसारतः जायमान जो पदार्थस्मृति—उससे "छत्रविशिष्ट कुण्डलविशिष्ट वस्त्रविशिष्टो देवदत्तः" इत्याकारक विशिष्टवैशिष्ट्यावगाहि महावाक्यार्थबोध होता है। ( एतेन )

---

ननु आशुतरविनाशिनीनां क्रमिकाणां पदजन्यपदार्थोपस्थितीनामपि मेलनाऽसंभवात्सर्वत्र शाब्दबोधे पदजन्यपदार्थोपस्थितिः समूहालंबनात्मिकैव कारणम्। एवं च सर्वत्र युगपदेव सकलपदार्थानां विशेष्येविशेषणमितिरीत्यैव शाब्दबोधः, न तु विशिष्टस्य वैशिष्ट्यमिति रीत्या, तज्जनकविशेषणतावच्छेदकप्रकारकनिर्णयस्य पूर्वमभावादिति मणिकृन्मतंदर्शयति। **परंत्विति। तावत्पदानां स्मरणादिति।** तावत्पदार्थविषयकैकस्मरणादित्यर्थः। **एकदैवेति।** एककाले एवेत्यर्थः। घटमानयेत्यादौ प्रथमं घटीया कर्मता, इत्यन्वयबोधस्तदनन्तरं च घटकर्मकानयनमित्यादिबोधः, तदनन्तरं च घटकर्मकाऽऽनयनानुकूलाकृतिरिति बोध, इति रीत्या अवान्तरशाब्दबोध एकस्मिन् काले, घटकर्मकाऽऽनयनानुकूलकृतिमानितिरीत्या महावाक्यार्थबोधश्च एकस्मिन् काले इति कालद्वये शाब्दबोधोनांगीक्रियते इति भावः। **खले कपोत न्यायादिति।** न्यायार्थस्तु स्वयमेव दर्शयिष्यति। **तावत्पदार्थानामिति।** समूहालंबनस्मृतिविषयतावत्पदार्थानामित्यर्थः। **क्रियाकारकभावेनेति।** विशेष्ये विशेषणमिति न्यायेनैवेत्यर्थः। **अन्वयरूप** इति। तात्पर्यविषयोयः पदार्थ

**एतेन तावद्वर्णाभिव्यङ्ग्यः पदस्फोटोपि निरस्तः।**

इस पूर्वोक्त कथन से वैयाकरणों से अभिमत एक पद में जितने भी वर्ण होते हैं उनसे अभिव्यंग्य ( प्रकाश्य ) जो पदस्फोट–वह भी खण्डित हो गया–क्योंकि पूर्वपूर्ववर्णों के अनुभव

---

द्वयसंसर्गः तद्विषयक इत्यर्थः। **इतिकेचिदिति**। वदन्तीति शेषः। **तथैवेति**। वृद्धयुवशिशुकपोतानां एककालावच्छेदेन खलेपतनवदित्यर्थः। सर्वे पदार्थाः परस्परेण युगपदन्वयिनो भवन्तीति योजना। **अन्वयिनोभवन्तीति**। इत्युदयनाचार्योक्तेरिति शेषः। तथा च तावद्विशेषणधीसत्वाद्विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति रीत्याशाब्दधीः, न तु विशिष्टवैशिष्ट्यमिति रीत्येति भावः।

अत्र छत्री कुण्डली गच्छतीत्यादौ छत्रविशिष्टकुण्डलस्य धर्मितावच्छेदकतया भानानुपपत्तिः। तत्प्रकारकज्ञानाऽभावात् इष्टापत्तौ तदुत्तरं छत्री कुण्डली गतिकर्ता न वेत्यादिसंशयापत्तिः। एवं छत्री कुण्डली नास्तीत्यादेरनुपपत्तिः, अतः खण्डवाक्यार्थधीरावश्यकी इत्याशयेनाह। **परेतु**। इति। **यदिति**। यत्पदमित्यर्थः।

**यदाकाङ्क्षितमिति**। यत्पदसाकाङ्क्षमित्यर्थः। **यद्योग्यमिति**। यत्पदार्थाऽबाधितार्थकत्वरूपयोग्यतावदित्यर्थः। **यत्सन्निधानमिति**। यत्पदनिरूपितनिरुक्तासत्तिमदित्यर्थः। **तेनेति**। तत्पदार्थेनेत्यर्थः। निरूपितत्वं तृतीयार्थः। अन्वितपदार्थैकदेशेऽन्वये तस्यान्वयः। **पदैरिति**। पदज्ञानैरित्यर्थः तृतीयार्थः करणत्वम्, तस्य धात्वर्थावगमेऽन्वयः। अवगम्यते एवेति अन्वयः। एवं—घटादिपदं तस्यार्थोघटादिः—तेनाऽऽकाङ्क्षितं—तदुपस्थितिजन्य "किंघटीयमिति" जिज्ञासाविषयीभूतं कर्मत्वादि–तेन कर्मत्वादिनाऽन्वितोयः स्वार्थो घटादिपदैरवम्यते एव—घटादिपदज्ञानजन्यशाब्दबोधविषयोभवत्येवेति समुदितार्थः। एतेन खण्डवाक्यार्थबोधः सूचितः। तथा चाऽऽनयनरूपार्थोपस्थितेः पूर्वमेव घटमितिपदेन घटीया कर्मता इति शाब्दबोधोभवत्येवेति परमार्थः। **खण्डवाक्यार्थबोधानन्तरमिति**। सावधारणम्। तथा चाऽवान्तरवाक्यार्थबोधजन्यस्मृत्युत्तरमेवेत्यर्थः। पदान्तरोपस्थितितज्जन्यतदर्थोपस्थितिवशेन महावाक्यधीपूर्वमेवाऽवान्तरवाक्यार्थधीनाशात्स्मृत्यनुधावनम्। न च तस्याःवृत्तिग्रहाजन्यत्वेन न शाब्दकारणत्वम्। अगत्या वृत्तिधीप्रयोज्यत्वस्यैव तत्रोपगमादिति भावः। वस्तुतस्तु पूर्वपदार्थस्य पदान्तरस्य च स्मृतिरेका, ततः खण्डवाक्यार्थबोधः ततः पदान्तरार्थस्मृतिः ततोमहावाक्यार्थधीः। अत एव वृत्तिधीप्रयोजकत्वस्य "एकस्य" दुर्वचत्वेपि न क्षतिः। खण्डवाक्यार्थग्रहस्यैव विशेष्यविशेषणतावच्छेदकप्रकारकधीतया तद्धेतुतयैव विशिष्टेवैशिष्ट्यमिति विशिष्टस्यवैशिष्ट्यमिति च रीत्या शाब्दबोधोपपत्तिः। तादृशस्मृतिहेतुत्वे तु "व्यवस्थापयिष्यते चाऽवान्तरवाक्यार्थज्ञानस्य महावाक्यार्थबोधहेतुत्वमित्यादिदीधितिग्रन्थोऽसंगतः स्यादिति। **तथैवपदार्थस्मृत्येति**। अवान्तरशाब्दबोधात्मक

पदज्ञानजन्यपदार्थज्ञानेन—अवान्तरशाब्दबोधात्मकानुभवजन्य "तत्समानाकारक" स्मरणेन वेत्यर्थः। महावाक्यार्थ बोध इति। स्वीक्रियते इति शेषः। इत्थं च सर्वत्राऽवान्तरशाब्दबोधोत्तरमहाशाब्दबोधोत्पत्त्या तादृशाब्दबोधस्य विशिष्टवैशिष्ट्यावगाहिबोधरूपत्वमेव तत्सामग्रीसत्वात्, अवान्तरशाब्दबोधस्यापि तद्रूपत्वमेव घटत्वादिप्रकारकस्मरणात्मकविशेषणतावच्छेदकप्रकारकनिर्णयसत्वान्न काप्यनुपपत्तिरिति भावः।

घटपदस्य क्रमिकाऽऽशुविनाशिनानावर्णात्मकतयाऽस्थिरत्वेन शक्तिग्रहस्य कथमप्यसंभवेनाऽर्थोपस्थापकत्वाऽसंभवात् स्फोटनामकः कश्चित्पदार्थः स्वीकर्त्तव्यः, स्फुटतिव्यक्तीभवतिअर्थोऽस्मादिति व्युत्पत्त्याअर्थप्रकाशकत्वम्, प्रकाशश्चज्ञानम्मितिवैयाकरणमतंदूषयितुमुपन्यस्यति एतेनेति। पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णानुभवरूपोद्बोधकोद्बोधितचरमवर्णसंस्कारेणैव क्रमिकतत्तद्वर्णविषयकपदस्मरणस्योपपादितत्वेनेत्यर्थः।

पदस्फोटोऽपीति। इदमुपलक्षणं स्फोटान्तराणामपि। तथाहि वर्णस्फोटः पदस्फोटः वाक्यस्फोटः अखण्डपदस्फोटः अखण्डवाक्यस्फोटः वर्णजातिस्फोटः पदजातिस्फोटः वाक्यजातिस्फोटश्चेत्यष्टविधाः स्फोटाः। तत्र वर्णस्फोटो नाम "सुप्तिङन्तं पदमि" तिपदलक्षणलक्ष्यघटकीभूतावयवविशेषस्फोटः प्रकृतिस्फोटः प्रत्ययस्फोटश्चेति यावदिति केचित्। अन्ये तु पूर्वपूर्ववर्णसंस्कारसहितचरमवर्णज्ञानस्य शाब्दबोधजनकतया तादृशचरमवर्णस्फोट एव वर्णस्फोट शब्दव्यवहार्य इत्याहुः। स्फोटत्वंचार्थनिष्ठशाब्दबोधविषयताप्रयोजकशक्तिमत्वम्। तच्च सुप्तिङन्तात्मकपदेऽप्यस्तीतिपदस्फोटः पृथक्। इतरे तु समभिव्याहृतवर्णानामर्थबोधजनकत्वान्न केवलं चरमवर्णस्फोट एव अपि तु यावद्वर्णस्फोटः स्वीक्रियते। पदस्फोटश्च तादृशवर्णसमुदायात्मकः। तादृशसमुदायश्च प्रकृतिप्रत्ययौ पृथगपि स्वीक्रियते इति प्रकृतिस्फोटः प्रत्ययस्फोटश्चपदस्फोटः एवेत्याहुः एतन्मते सुप्तिङन्तस्य पृथक् स्फोटः कल्पनीयो भवति। घटेनेत्यादौ घटे इति प्रकृतिः 'न' इति प्रत्ययः किं वा घट् इति प्रकृतिः एन इति प्रत्यय इति विभज्य दर्शयितुमशक्यत्वात्। युष्मदस्मदोः षष्ठयादिस्थले वस् नस् ते मेवाम् नौ इत्यादौ प्रकृतिप्रत्ययविभागासंभवाच्च। पदेष्विव वाक्येऽपि शाब्दबोधजनकत्वसत्वात् वाक्यस्फोटः पदस्फोटात् पृथगेव। हरेऽव विष्णोऽव इत्यादौ पदविभाग विरहाच्छाब्दबोधदर्शनाच्च।

पदे वर्णा न सन्ति। एवं वाक्येऽपि। अनन्तवर्णकल्पनाया गौरवात्। वर्णाभिव्यञ्जकवायुसंयोगनिष्ठवैजात्येनैवककारः गकारइत्यादिप्रतीतिवैलक्षण्यसंभवात्। न चैवं तादृशवायुसंयोगस्यैव वाचकत्वमस्त्विवति वाच्यम्। तस्याऽप्रत्यक्षत्वात्। इत्थं चाखण्डौ पदस्फोट-वाक्यस्फोटौ इति मतान्तरसंगृहीतस्फोटाभ्यां सहपञ्चव्यक्ति-स्फोटाः।

जातौ शक्ति र्न तु व्यक्तौ लाघवादिति मतेन यथा जातौ शक्तिरुपगम्यते तथा

तत्तद्वर्ण संस्कार सहितचरमवर्णोपलंभेन तद्व्यञ्जकेनैवोपपत्तेरिति ।

जन्यसंस्कारसहित जो चरमवर्णज्ञानरूप पद का व्यञ्जक—उसी से पदार्थोपस्थिति होकर शाब्दबोध की उत्पत्ति हो जावेगी–[ अभिप्राय यह है कि वैयाकरण लोग पौर्वापर्य भावापन्न तत्तद्वर्ण-समुदायस्वरूप जो पद—वह पूर्वपूर्ववर्णों के तृतीयक्षण में नष्ट हो जाने के कारण अर्थोपस्थिति का जनक न हो सकेगा—अतः स्फोट मानना चाहिये ऐसा कहते हैं—वह स्फोट अर्थोपस्थिति का जनक होने के नाते "स्फुटति-ज्ञायते अर्थः-अनेन" इस व्युत्पत्ति बल से स्फोट पद व्यवहार

---

शक्ततापि वर्णपदादिजातावेव आनुपूर्वीविशेषाच्च स्फोटाभिव्यक्तिरितिवर्णजाति-स्फोटादिभेदेनत्रयः स्फोटाः मतान्तरेण ।

एते च स्फोटाः वर्णपदवाक्याद्यनतिरिक्ता इति नव्यवैयाकरणानां भूषण-कारादीनां मतम्। स्फुट्यते प्रकाश्यते ऽर्थोऽनेनेतिवर्णादिषु तदुपलंभात्। तत्र स्फोटशब्दस्य गौरवापादकपृथक्प्रयोगमात्रमितिनाधिकं तत्त्वम्। पदमित्यनुक्त्वा पदस्फोट इत्युक्तेरुक्तिवैलक्षण्यमात्रत्वात्। पदस्फोटः शाब्दबोधजनक इत्यादौ च पौन रुक्त्यं च इति यत्किंचिदेतत्। वाक्यादौ नास्तिशक्तिरित्यस्य पूर्वं निरस्ततया तन्निरासाय पृथग्यत्नोऽपि नास्थेयः। ये तु वर्णादिभिन्नाएववर्णाभिव्यङ्ग्याःपद-स्फोटादय इति मन्यन्ते ते एव निरसनीया इत्याशयेनाहवर्णाभिव्यङ्ग्य इति।

अथ को नामायं स्फोट इति। अत्र वदन्ति—शब्दब्रह्मैव स्फोट इति। तच्च विचिकीर्षावशात् घनीभूतायाश्चिते विन्दुभावमापन्नाया स्वरूपेणभिद्यमानावस्था। यदुक्तंप्रपञ्चसारेआचार्यैः शंकरभगवत्पादैः—"विचिकीर्षुर्घनीभूता साचिदभ्येतिविन्दुताम्" इति। बिन्दोस्तस्माद्भिद्यमानादव्यक्तात्माखोऽभवत्। सखः श्रुतिसंपन्नैः शब्दब्रह्मेति गीयते इति च इयमेव परा वागित्यप्युच्यते, सोऽयं खः कारणबिन्दुतादा-त्म्यापन्नोऽव्यञ्जकयत्नसंस्कृतपवनवशात् प्राणिनां मूलाधारे एवाभिव्यज्यते। तदेव नाभिपर्यन्तमागतं पश्यन्तीत्युच्यते। तदेवशब्दब्रह्म हृदयपर्यन्तमागतंमध्यमेत्युच्यते। तदेव वदनपर्यन्तमागतं परश्रोत्रप्रत्यक्षविषयत्वयोग्यं वैखरीत्युच्यते। तदुक्त-माचार्यपादैः "मूलाधारात्प्रथममुदितो यश्च भावः पराख्यः पश्चात्पश्यन्त्यथ हृदयगो-बुद्धियुङ्मध्यमाख्यः। व्यक्ते वैखर्यथरुरुदिषोरस्य जन्तोः सुषुम्णा बद्धस्तस्माद् भवति पवनप्रेरिता वर्णसंज्ञा" इति। श्रुतावप्युक्तं—चत्वारिवाक् परिमितापदानि तानि विदु र्ब्रह्मणा ये मनीषिणः। गुहात्रीणिनिहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" इति। यद्यपि आचार्यादिभिः वर्णोत्पत्तिक्रममुपपाद्य वर्णात्मकमेव शब्दब्रह्म प्रतिपादि-तमिति तादृशमेव शब्दब्रह्म स्फोट इति नव्यैः स्वीकृतम्। प्राचीनास्तु तत्शब्दब्रह्म पृ-थगेव तत्त्वम्। वर्णास्तूत्पत्ति विनाशशालिन इति प्रतिपेदिरे। भट्टोजिदीक्षितास्तु शब्द-कौस्तुभे वर्णमालायां पदमिति प्रतीतेर्वर्णातिरिक्त एव स्फोटः। अन्यथा कपालाति-रक्तघटाद्यसिद्धिप्रसङ्गश्चेत्याहुः। तदसमञ्जसम्। नष्टकपालेन घटोत्पत्त्यदर्शना-न्नष्टवर्णैरपि पदोत्पत्त्यसंभवात् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। तस्माद् वर्णाभिव्यङ्ग्यवर्णेभ्यो विलक्षणं किंचित्तत्त्वं स्फोटपदाभिधेयमित्येव मतं सम्यक्।

अथकिमर्थमयं स्फोट उररीक्रियत इति। उच्यते। अर्थप्रत्यायकत्वम्। न वर्णात्मकशब्दानां संभवति। नहि एकैकेषां वर्णानामर्थप्रत्यायकत्वम्। गकारादीनां केवलानां गवाद्यर्थाऽप्रत्यायकत्वात्। न च मिलितास्तेऽर्थं प्रत्याययेयुरिति वाच्यम्। वर्णानां मेलनाऽसंभवात्। न च पूर्व-पूर्ववर्ण संस्कारसहितान्त्यवर्णज्ञानं तज्जनितपदस्मरणं वा प्रत्यायकमित्यदोष इति वाच्यम्। यत्र टमानयेत्युक्तं तत्र कालान्तरीयघकाराकारयोः संस्कारमादाय घटमानयेत्यादिबोधापत्तेः। एवं पुरुषान्तरोच्चरितघकारादिप्रत्यक्षजनितसंस्कारमादायापि। न च घकारविशिष्टाकारविशिष्टकारविशिष्टकारविशिष्टप्रत्यक्षजनितस्मरणं वक्तव्यम्। वैशिष्ट्यं च सर्वत्राव्यवहितोत्तरत्व समानपुरुषीयत्वोभयसम्बन्धेनेति न दोष इति वाच्यम्। विभिन्नकालीनयोर्वैशिष्ट्यायोगात्। तत एव स्फोटोपगमात्। अव्यवहितोत्तरत्वस्य स्वत्वघटितत्वेनाऽननुगमाच्च। अपि च नहि घकाराराादीनामव्यवहितोत्तरत्वनियमः। सामगानादौ विलम्बेनोच्चार्यमाणवर्णैरपि बोधदर्शनात् तस्मात् तादृशवर्णैरभिव्यङ्ग्यः स्फोट एव प्रत्यक्षीक्रियमाणः स्मियमाणो वा शाब्दबोधहेतुरिति।

तदेतद्वैयाकरणमतं दूषयति—तत्तद्वर्णेति। अयं भावः—वर्णात्मक एव शब्दोऽर्थप्रत्यायकः। वर्णसत्त्वेऽ र्थप्रत्ययस्तदभावे तदभाव इत्यन्वयव्यतिरेकात्। न च स्फोटाभिव्यञ्जकान्वयव्यतिरेकविषयतयाऽन्यथासिद्धिरिति वाच्यम्। स्फोटासिद्धेः। तत्तद्वर्णसंकारसहितचरमवर्णज्ञानजनितपदज्ञानस्य कारणत्वोपपत्तेः। न च राजा-जरा-पलितं-लपितमित्यादेः समानार्थबोधकतापत्तिरितिवाच्यम्। क्रमविशेषजनितसंस्कारसहकृतचरमवर्णज्ञानस्य वक्तव्यत्वात्।

ननु तत्तत्पकारादिग्रहणे प्रथमं शृण्वतः शक्तिग्रहोऽन्यत्र न स्यात्। निखिलपकाराद्युत्तरत्वमप्रसिद्धम्। भिन्नपुरुषीयपकारादितःशाब्दबोधापत्तिश्च स्यात्। न च पत्वावच्छिन्नविशिष्ट—अत्वावच्छिन्नविशिष्टलत्वावच्छिन्नविशिष्टेत्यादिरीत्याऽनुगमनं कर्त्तव्यम्। वैशिष्ट्यं च स्वोच्चारकपुरुषोच्चारितत्व—स्वाव्यवहितोत्तरत्वोभयसम्बन्धेनेति न दोष इति वाच्यम्। विभिन्नकालीनयोर्वैशिष्ट्यविरहस्योक्तत्वात्, अव्यवहितोत्तरत्वस्य स्वत्वघटितत्वाच्चेति चेन्न पत्वावच्छिन्नप्रत्यक्षविशिष्टात्वावच्छिन्नप्रत्यक्षविशिष्टेत्यादिरीत्यानुगमनीयत्वात्। वैशिष्ट्यं च स्वविषयोच्चारकपुरुषोच्चारितत्व—स्वनिरुपितकालिकसम्बन्धावच्छिन्नवृत्तित्वोभयसम्बन्धेन। वैशिष्ट्यं वर्णे बोध्यम्। तथा च प्रथमं पकारोच्चारणं द्वितीयक्षणे प्रत्यक्षं तद्वैशिष्ट्यं च द्वितीयक्षणोत्पन्नवर्णे सुघटमेव। ननु स्वोच्चारकत्वं स्वप्रत्यक्षजनकत्वं स्वजनकत्वं वाउभयमपि जनकताघटकस्वत्वघटिततयाऽननुगमकम्। न च स्वावच्छेदकशरीरावच्छिन्नत्वस्य निवेश्यत्वात् न दोष इति वाच्यम्। क्रमेण भिन्नपुरुषद्वयोच्चारितघकारटकारयोः एकपुरुषीयकर्णशष्कुल्यवच्छेदेन जायमानत्वात्स्वावच्छेदकावच्छिन्नत्वसस्वादाद्यत्वनिवेशस्य कर्तव्यत्वात्। आद्यत्वं च शब्दाजन्यत्वं, जन्यताघटकस्वत्वघटितमिति चेन्न। जन्यत्व, जनकत्वादेः स्वरूपसम्बन्धविशेषतायां दोषाभावात्।

गिरिर्भुक्तमग्निमानित्यादावासत्तिविरहात् अमानयेत्यादावाकाङ्क्षाविरहाच्चादोषः । विलम्बोच्चारणस्थलेऽपि अव्यवहितोत्तरत्वानुसन्धानादेव शाब्दबोधः । अन्यथा स्फोटवादिनामपि स्फोटव्यञ्जकतया अव्यहितोत्तरत्वघटितवर्णज्ञानस्य वक्तव्यतया दोषतादवस्थ्यात । तदिदमाह तद्व्यञ्जकेनेति । यश्चोभयोः समो दोषः परिहारोऽपि वासम इति न्यायादिति भावः ।

अथ तावद्वर्णसंस्कारसहितचरमवर्णज्ञानेन किमुद्बोध्यते ? पदविषयकसंस्कार इति चेत् ? कदा भवता पूर्वपदमनुभूतमिति वक्तव्यं येन पदसंस्कार उद्बुध्येत । ननु पूर्वानुभूतपदसंस्कारोऽधुना उद्बुध्यते इति नोच्यते किन्तु तत्समयमेवोच्चरितपूर्वपूर्ववर्णप्रत्यक्षजनितसंस्कारा एवोद्बुध्यन्त इति तैरेवैकपदस्मरणमिति तन्न । राजा जरेत्यादावेकार्थावगत्यापत्तेः । न च येन क्रमेण वर्णा उत्पन्नास्तेनैव क्रमेण तत्स्मरणमिति वाच्यम् । एकस्मिन् स्मरणध्वंसघटितवर्णक्रमायोगात् । न च तत्तद्वर्णाव्यवहितोत्तरत्वविशिष्टतया उत्तरोत्तरवर्णस्मरणमेव जायते इति वाच्यम् । अव्यवहितोत्तरत्वस्यातीन्द्रियघटिततया प्रत्यक्षाविषयत्वात् स्वत्वघटितत्वस्योक्तत्वाच्च । न च घकारप्रत्यक्षविशिष्टाकारप्रत्यक्षविशिष्टेत्यादिरीत्योक्तत्वान्न दोष इति वाच्यम् । घट इत्यादिपदस्मरणे प्रत्यक्षादिपदार्थस्य विषयतया केनाप्यननुभवात् । यथाकथंचिदव्यवहितोत्तरत्वमनुगमय्य अनुमानेन तज्ज्ञानं संपाद्येत, तदा यावदनुमानं क्रियते तावदुत्तरवर्णस्योच्चरिततया, निगर्ततया च तच्छ्रवणमेव न स्यात् । शाब्दबोधविलम्बश्च स्यात् तस्मात् घकारप्रत्यक्षविशिष्टाकारप्रत्यक्षविशिष्टटकारप्रत्यक्षविशिष्टाकारप्रत्यक्षं घटपदस्फोटाभिव्यञ्जकम् । कालान्तरे च स्फोटस्मरणमेव नत्वभिव्यक्तिः । न च यत्र सुधा इत्यादौ धकारे तकारत्वभ्रमस्थले सुता इत्यादिबोधदर्शनात्तदुपपत्तिः कथं भवेदिति वाच्यम् । घकारप्रत्यक्षविशिष्टवृत्तिविषयतानिरूपकप्रत्यक्षविशिष्टवृतिविषयतेत्यादिरीत्या निवेश्यत्वात् । तत्तद्विषयतायां अकारत्वाद्यवच्छिन्नत्वस्य प्रवेश्यत्वात् ।

ननु घकारप्रत्यक्षविशिष्टवृत्तिर्या अत्वावच्छिन्नविषयतातन्निरूपकप्रत्यक्षेत्यादिरीत्यानुगमय्य तादृशान्तिमवर्णप्रत्यक्षमेव शाब्दबोधजनकमित्युपगम्यतामितिचेन्न । पदस्मरणेन शाब्दबोधजनकतायाः सर्वानुभवसिद्धाया अपलापापत्तेः । यदि च प्रत्यक्षस्थाने ज्ञानमात्रं निवेश्यते तदापि 'घट' इति श्रुतं अ इति च स्मृतं तत्रापि शाब्दप्रसङ्गः । किंचाव्यवहितोत्तरतया टकारविशिष्टोऽकारः तथाविधश्च घकारविशिष्टोऽकार इत्येवं विशकलितरूपेण स्मरणेऽपि घट इति शाब्दबोधापत्तिः । न च परस्परनिरूप्यनिरूपकभावापन्नविषयता प्रवेश्येति न दोष इति वाच्यम् । प्रत्यक्षाऽसंग्रहापत्तेः । विभिन्नकालीनप्रत्यक्षीयविषयतयोर्निरूप्यनिरूपकभावविरहात् । यत्र क्रमशः घकाराकारटकाराकाराणांस्मरणं तत्रापि सर्वतान्त्रिकविरुद्धशाब्दबोधापत्तेश्चेति । अत्रोच्यते घट इति शब्दश्रवणानन्तरं घकारोत्तराकारोत्तरटकारोत्तराकारो मया श्रुत इत्यनुभवस्य सार्वजनीनतया अव्यवहितोत्तरत्वमपि तत्र प्रत्यक्षीकृतमेवेत्यवश्यं मन्तव्यम् । न च स्फोटाभिव्यक्तया अनुमानमेव स्फोटेनेति वाच्यम् । यत्र वीणादौ निषादर्षभादीनां

इदं तु बोध्यम्। यत्र द्वारमित्युक्तं तत्र पिधेहीतिपदस्य ज्ञानादेव बोधो, न तु पिधानादिरूपाऽर्थज्ञानात्। पदजन्यतत्तत्पदार्थोपस्थितेस्त-

का विषय है–अथ च वह स्फोट ब्रह्मरूप है–क्योंकि वैयाकरण शब्दब्रह्मवादी हैं। नैयायिक स्फोट का खण्डन पूर्वोक्तरीति से करते हैं]। अब पदार्थोपस्थितिमात्र को कारण मानने वाले अर्थाध्याहारवादीप्रभाकर के मत का खण्डन करते हैं–"इदन्तु बोध्यम्" इत्यादिग्रन्थ से। जहाँ किसी वक्ता ने 'द्वारम्' एतावन्मात्र कहा–वहाँ 'पिधेहि' (बन्दकरो) इत्यादि अध्याहृत पद के ज्ञान अर्थात् श्रावण प्रत्यक्ष से ही शाब्दबोध होता है–किन्तु पिधान आदि रूप अर्थ के ज्ञान (स्मरणमात्र) से नहीं। क्योंकि पदजन्यपदार्थोपस्थिति शाब्दबोध में

---

क्रमशः वादनं तत्रापि क्रमविशिष्टस्यानुव्यवसायदर्शनात् किं तत्रापि भवता स्फोट उपगम्यते? न चैवं शक्यं वक्तुम्। अनुव्यवसायाद्यन्यथानुपपत्त्या अन्तत उपनीतभानस्यापि वलात् स्वीकर्त्तव्यत्वात् तत्र च कर्मविशेपेणोच्चारणमेवाव्यवहितोत्तरत्वसंस्कारोद्बोधको भविष्यति। इत्थं च पदश्रवणानन्तरं निरूप्यनिरूपकभावापन्नविषयताकेन स्मरणेन मानसप्रत्यक्षेण वा पदविषयकेण शाब्दबोधः सूपपन्नः। न चैवमपि घटपदं मया श्रुतमित्यनुव्यवसायविरोधः, तावद्विषयकैकप्रत्यक्षविरहात्। घटपदं मयास्मृतमिति तु युक्तं स्यात् इति वाच्यम्। वीणायां सारे ग-म-प-धनि-से-तिस्वरसमुदायो मयाश्रुतः इत्यत्र तव यदुत्तरं ममापि तदेवात्रापि। एकपदमिति तु प कोधान्यराशिरितिवद्भविष्यति। वीणायामेकं गानं मया श्रुतमिति प्रत्ययदर्शनाच्च।

शाब्दबोधे पदार्थः करणं, न तु पदम्। अतएव रचयितव्यस्य काव्यस्याऽर्थं प्रबुध्य रचयति। कविर्हि काव्यरचनार्थं तदनुगुणानर्थान् चिन्तयति। ततश्चिन्तावशोपस्थितपदार्थानामन्वयं बुध्वा काव्यं रचयति। एतच्च–"अतएव चिन्तावशोपस्थितपदार्थानामन्वयबोधात्कविकाव्यादिरिति" शब्दमणौव्यक्तम्।

तादृशपदार्थज्ञानं च असन्निकृष्टविषयकत्वात् न प्रत्यक्षं, व्याप्तिज्ञानापूर्वकत्वात् नानुमितिः, शब्दाभावान्न शाब्दबोधः, परन्तु अन्वयबोध एव, तादृशबोधे चिन्तावशोपस्थिता एव पदार्था हेतवो न तु पदानि। क्वचित्पदार्थोपस्थित्यर्थं पदस्यापेक्षणेपि पदार्थोपस्थित्या पदमन्यथासिद्धम्। कथमन्यथा श्वेतरूपदर्शनात् हेषाशब्दश्रवणात् खुरविक्षेपशब्दश्रवणाच्छब्दं विनापि श्वेतोऽश्वोधावतीतिधीरुत्पद्यते। तथा चाहुः।

पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः।
खुरविक्षेपशब्दं च श्वेतोश्वोधावतीति धीरिति॥

तथा चाऽवश्यस्वीकार्यपदार्थोपस्थितौ पदमन्यथासिद्धमिति। अतएव द्वारमित्यादौ न पिधेहीतिपदाध्याहारः किन्तु पिधानादिरूपार्थाध्याहार इति केषाचिन्मतं तद्दूषयति। इदं तु बोध्यमिति। ज्ञानादेवेति एवकारव्यवच्छेद्यमाह। नत्विति। पदजन्येति।

